शेषादिषु प्रयुक्ताः । तद्यथा - ब्रह्म, विष्णु, कृष्णश्चेति वाचकतया ।

[1]''अच्युतानन्तगोविन्दनामोच्चारणभेषजात् ।
नश्यन्ति सकला रोगा सत्यं सत्यं वदाम्यहम्''॥

**कृष्णामृतमहार्णवः -२०४**

[2]''इत्याद्यनन्तानि हरेरुदारकर्माणि रूपाणि च सद्गुणाश्च ।
नित्यव्यपेताखिलदोषकस्य ब्रह्मेत्यनन्तेति च नाम येन''॥

**-म.ता.नि. ३२-१६९**

[3]''नमोऽनन्ताय विश्वाय विश्वातीताय चक्रिणे''।

**पञ्चरात्रे-जितन्तेस्तोत्रे १-३१**

[4]''त्राति कृष्णेत्यनन्तेति वदन्नभ्यपद्यत''। **-वि.पु. १-१८-३८**

[5]''अनन्तस्य न तस्यान्तः संख्यानं चापि विद्यते ।
तदनन्तमसंख्यातप्रमाणं चापि वै पुनः''॥ **-वि.पु. २-७-२६**

[6]''निर्गुणो - निष्कलोऽनन्तोऽभयोऽचिन्त्योऽचलोऽच्युतः''।

**पद्मपुराणे** - उमापतिनारदसंवादे वासुदेवसहस्रनामस्तोत्रे

[7]''अनन्त इत्यहं पार्थ मम रूपं निबोध तत् ।
योऽयं कालो मयाऽख्यातः सोऽनन्त इति कीर्त्यते'' ॥

**भविष्यो**त्तरपुराणे - धर्मराजं प्रति कृष्णवचनम् - अनन्तव्रतावसरे

भागवते शतशोऽथ श्लोकाः अनन्तशब्दमधिकृत्य प्रवृत्ताः । केचनैव उदाह्रियन्ते।

---

१. कृ.म. पृ. ३०५
२. म.ता.नि. पृ. ५१८
३. स्तो.मा.भा. पृ. ४०
४. वि.पु.पृ. ११०
५. वि.पु. पृ. १६१
६. स्तो.मा.भा. ६ पृ. २८
७. र.सं.श. पृ. ४१-४४

[८]''नामान्यनन्तस्य यशोऽङ्कितानि यच्छ्रुण्वन्ति गायन्ति गृणन्ति साधवः''। ५-११

[९]मय्यनन्तगुणेऽनन्ते गुणतोऽनन्तविग्रहे । (६) ४-४८

[१०]महामायेत्यविद्येति नियतिर्मोहिनीति च ।
प्रकृतिर्वासिनेत्येव तवेच्छानन्त कथ्यते । **स्कान्दे** इति भा.ता.(४)१२-१५

[११]अश्नात्यनन्तः खलु तत्त्वकोविदैः श्रद्धाहुतं यन्मुख ईड्यनामभिः ।
(४)-२१-४०

[१२]जह्यासुरं भावमिमं त्वमात्मनः समं मनो धत्स्व न सन्ति विद्विदः।
तद्धि ह्यनन्तस्य महत्समर्हणम् ।। (७)-८-१०

[१३]अहोऽनन्तदासानां मह्त्त्वं दृष्टमद्य मे । (९)-५-१४

[१४]सत्यं ज्ञानमनन्तं यद्ब्रह्मज्योतिः सनातनम् । (१०)-२८-१५

[१५]नमस्तस्मै भगवते कृष्णायाद्भुतकर्मणे ।
अनन्तायादिभूताय कूटस्थायात्मने नमः ।। भा. (१०)-६१-१७

## महाभारते

[१६]''नमोऽस्त्वनन्ताय सहस्रमूर्तये सहस्रपादाक्षिशिरोरुबाहवे।
सहस्रनाम्ने पुरुषाय शाश्वते सहस्रकोटियुगधारिणे नमः ।।
-सन्ध्यामन्त्रेऽपि पठितः

## भगवद्गीतायाम्

[१७]अनन्त देवेश जगन्निवास ....

---

८. भा. पृ. ९
९. भा. पृ. ३२६
१०. भा.ता. पृ. २३७
११. भा. पृ. २२०
१२. भा. पृ. ३८७
१३. भा. पृ. ४८२
१४. भा. पृ.
१५. भा. पृ. ६७१
१६. वि.स्तो.शां.भा. पृ. ६७६
१७. गीता अ. ११-३७ॅ

[१८]मया प्रसन्नेन तवार्जुनेदं तेजोमयं विष्णुमनन्तमाद्यम्    ११-४७

## विष्णुसहस्रनामस्तोत्रे

[१९]वीरोऽनन्तो धनञ्जयः ।

[२०]अनन्तो हुतभुग्भोक्ता ..... ।

## सर्वमूलग्रन्थेषु

[२१] रोगपरिहारार्थं अनन्तादिनामोच्चारणं कृष्णामृतमहार्णवे उक्तम्।

''अच्युतानन्तगोविन्दनामोच्चारणभेषजात् ।
नश्यन्ति सकला रोगाः सत्यं सत्यं वदाम्यहम्॥'' कृ.म. २०४

अत्र रोगनिवारकत्वेन स्मरणविधानं कृतम्।

## द्वादशस्तोत्रे

[२२]सन्ततं चिन्तयेऽनन्तमन्तकाले विशेषतः।

उपासनार्थं चिन्तनम् कृतमत्र द्वा.स्तोत्रे. १-१२

[२३]विमलैः श्रुतिशाणनिशाततमैः सुमनोसिभिराशु निहत्य दृढम् ।
बलिनं निजवैरिणमात्मतमोभिदं ईशमनन्तमुपास्व हरिम्॥४-५

## ब्रह्मसूत्रभाष्ये

### अनन्तो विष्णुरेव

[२४]अनन्तो भगवान् ब्रह्म आनन्देत्यादिभिः पदैः ।
प्रोच्यते विष्णुरेवैकः परेषामुपचारतः ॥    - ब्राह्मे (१)-१-८-२२

---

१८. गीता. अ. ११-४७
१९. वि.स. स्तो. ८३
२०. वि.स. स्तो. १०८
२१. सं.ग्र. पृ. ३७१
२२. सं.ग्र. पृ. ३७८
२३. सं.ग्र. पृ. ३८७
२४. ब्र.सू.भा. पृ. २५

[25]हरिरनादिरनन्तोऽनन्तशीर्षो । चतुर्वेदशिखायाम् (१)-२-७-२६

[26]एष स्त्री एष पुरुष एष प्रकृतिरेष आत्मैष... हरिरनादिरनन्तः परमः ..। ....पराद्विश्वरूपः ....... १-४-७-२६ **पैङ्गिश्रुतिः**

## अनन्त इति शब्दः लक्ष्मीनामवाचकतया श्रूयते

[27]अनन्ता लोकमाता च भूर्लीला च सुखप्रदा ।
रुग्मिणी च तथा सीता सर्वा वेदवती शुभा ।

**विष्णुपुराणे - महालक्ष्मीस्तोत्रे**

[28]चिद्रूपा सा त्वनन्ता च अनादिनिधना परा।
........................
नारायणस्य महिषी माता सा ब्रह्मणोऽपि हि ॥

गीताभाष्योदाहृत - नारदीये (गीता. ७-५ श्लोकव्याख्यायां)

[29]''अनन्ता भाविनी भव्या भव्या भव्या सदागतिः'' ॥

**इति श्री दुर्गाष्टोत्तरशतनामस्तोत्रम्**

## तुलस्युपनिषदि तुलसीनामवाचकतया

[30]अथ तुलस्युपनिषदं व्याख्यास्यामः । नारद ऋषिः। अथर्वाङ्गीरश्छन्दः। ......अमृतातुलसी देवता। ......''श्यामां श्यामवपुर्धरां ऋक्स्वरूपां यजुर्मनां ब्रह्माथर्वप्राणां कल्पहस्तां पुराणपठितां अमृतोद्भवां.......। अनन्तां वैष्णवीं विष्णुवल्लभां .....श्री तुलस्यै स्वाहा विष्णुप्रियायै धीमहि''

---

२५. ब्र.सू.भा. पृ. ४४
२६. ब्र.सू.भा. पृ. ७७
२७. स्तो.म.भा. (१) पृ. १११
२८. गी.भा. पृ. १२३
२९. दु.अ.श. पृ. १०, ११७
३०. वै. उसं पृ. ७०
३१. म.ता.नि. पृ. १४८
३२. भा.ता. पृ. ३६८

## गरुड इत्यर्थे

[३१]योऽनन्तनामा गरुडस्तदंसके उत्पाट्य चैकेन करेण मन्दरं।

**-म.ता.नि. १०-६**

[३२]''अनन्तोढो मन्दरस्तु यदा वैवस्वतान्तरम् ।
अमृतार्थं सुपर्णोढो रैवतस्यान्तरे मनोः ॥'' -भा.ता. (८)-६-३९
(ब्र.पु.)

## शेष इत्यर्थे च

[३३]''नागेन्द्राणामनन्तोऽहं ।'' भा. (११)-१६-२९

[३४]''शेषोऽनन्तो नरश्चैव लक्ष्मणो बल एव च ।'' भा.ता. (९)-१६-३२
अत्र अनन्त-नरलक्ष्मणबलरामादयः
शेषावतारमित्यमिहितः

[३५]''वासुदेवकलानन्तः सहस्रवदनः स्वराट् ।
अग्रतो भविता देवो हरेः प्रियचिकीर्षया॥'' भा. (१०)-१-२४

अत्र बलरामस्य शेषावतारः वासुदेवांशश्चेत्यभिहितः।

नरो नाम शेष एव - तदर्थोऽपि उक्तः ।

[३६]''धर्मस्य दक्षदुहितर्यजनि स्वमूर्त्या नारायणो नर इति स्वतपः प्रभावः।''
भा.(२) ७-६ तत्रैव भा. तात्पर्यम्

[३७]''अनन्तो नरनामाऽत्र तस्मिंस्तु नरनामवान् ।'' षाड्गुण्ये (२)-७-६

[३८]शेष-संकर्षण (विष्णु)मिश्रस्तुतौ च

---

३३. भा. पृ. ८११
३४. भा.ता. पृ. ५५७
३५. भा. पृ. ५२७
३६. भा. पृ. ६४
३७. भा.ता. पृ. ८५
३८. भा. पृ. ३०८

''तस्य मूलदेशे त्रिंशद्योजनसहस्रान्तर आस्ते या वै कला भगवतस्तामसी समाख्याता अनन्त इति। सात्वतीया द्रष्ट्रदृश्ययोः सङ्कर्षणमहमित्यभि-मानलक्षणमित्याचक्षते''। तत्र भा. तात्पर्ये भा. (५)-२३-३७

[३९]ॐ नमो भगवते महापुरुषाय सर्वगुणशंख्याताय अनन्तायाव्यक्ताय नमः इति॥ -भा. (५) १७-१५

तत्र तात्पर्ये च

[४०]अनन्तान्तःस्थितो विष्णुरनन्तश्च सहामुना ।
पूज्यते गिरिशेनेश इलावृतगतेन तु॥'' इति च -भा. (५) १७-१५

**निरवधिरित्यर्थे अनन्तपारशब्दः**

[४१]''शब्दब्रह्म सुदुर्बोधं प्राणेन्द्रियमनोमयम् ।
अनन्तपारं गङ्भीरं दुर्विगाह्यं समुद्रवत्॥'' भा.ता. (११)-२१-३६

तत्रैव तात्पर्ये

[४२]''अन्तो विनाश उद्दिष्टः पारः परिमितिस्तथा।
अनन्तपारो वेदोऽयं ताभ्यां स रहितो यतः ॥''भा.ता. (११)-२१-३६

[४३]अनन्ताश्च तथा वेदाः साङ्गोपाङ्गाश्च सर्वशः। बृहद्भाष्ये ॥ ५७१

[४४]गृहेषु दारेषु सुतेषु बन्धुषु अक्षय्यरत्नाभरणाम्बरादिषु
.....अनन्तकोशेष्वकरोदसन्मतिः ॥ (९)-४-२७

## इदमत्रावधेयम् ।

अनन्तशब्दस्तावत् शास्त्रे (१) नामवाचकतया

(१) विष्णुः, कृष्णः, परंब्रह्म, (२) लक्ष्मीः, (३) तुळसी, (४) गरुडः,

---

३९. भा.ता. पृ. २९२
४०. भा.ता. पृ. २९२
४१. भा. पृ. ८२३
४२. भा.ता. पृ. ५८१
४३. उ.प्र.भा. पृ. ५७९
४४. भा. पृ. ४७९

(५) शेषः, (६) निरवधिः, (७) नाशरहितः, (८) असङ्ख्यातः इत्याद्यर्थेषु व्यवहृतः । एष्वेवार्थेषु (६, ७, ८) विशेषणतयापि बहुत्र प्रयुक्ताः । तद्यथा

(१) गुणः - अनन्तगुणः

[४५]तस्मै नमोऽनन्तगुणाय भूम्ने ॥ भा. (६)-४-३१

(२) कर्म - अनन्तकर्माणि

(३) जन्म - अनन्तजन्मानि (अवताराणि वा)

[४६]मत्स्यकूर्मवराहाद्यैरवतारैः कृतानि मे ।
कर्माण्यनन्तपुण्यानि सूर्यं सोमं हुताशनम् ॥ भा. (८)-४-२१

[४७]जन्मकर्माभिधानानि सन्ति मेऽङ्ग सहस्रशः ।
न शक्यन्तेऽनुसंख्यातुं अनन्तत्वात् मयाऽपि हि ॥ (१०)-५४-३६

(४) सुखं - अनन्तसुखं

[४८]''ब्राह्मणस्य च देहोऽयं क्षुद्रकामाय नेष्यते ।
कृच्छ्राय तपसे चेह प्रेत्यानन्तसुखाय'' ॥ (१०)-१७-४१

(५) स्थानं - अनन्तासन (मिति हरेः स्थानविशेषः)

[४९]''एष नैमित्तकः प्रोक्तः प्रलयो यत्र विश्वसृक् ।
शेतेऽनन्तासनो विश्वमात्मसात्कृत्य चात्मभूः'' ॥ भा. (१२)-४-४

(६) वीर्य-शक्ति - अनन्तशक्तिः अनन्तवीर्यम्

[५०]''व्रजे स वासोऽरिभयादिव स्वयं पुराद्व्यवासीत् यदनन्तवीर्यः।''
-भा.(३)-२-१६

---

४५. भा. ३२५
४६. भा. ४२०
४७. भा. पृ. ६५४
४८. भा. पृ. ८१४
४९. भा. पृ. ८५६
५०. भा. पृ. ८०

[51]“त्वमादिरन्तो भुवनस्य मध्यमनन्तशक्तिं पुरुषं यमाहुः”(८)-१७-२७

(७) बलम् - विभवः - अनन्तबलम् - अनन्तविभवः

[52]“पर्यक्प्लुतो विषकषायविभीषणोर्मिः
धावन् धनुःशतमनन्तबलस्य किं तत्॥” (१०)-१६-७

## दानधर्मानन्त्यम्

[53]“पूर्वं त्वशुभं भुंक्ष्व उताहो नृपते शुभम्।
नान्तं दानस्य धर्मस्य पश्ये लोकस्य भास्वतः॥” (१०)-८७-३७

एवमनन्तशब्दः वेदेषु वैदिकग्रन्थेषु च विष्णु-लक्ष्मी-दुर्गा-तुलसी गरुड-शेषदेवतार्थेषु, निरवधिक-असंख्यातार्थे औपचारिकतया बहुत्वार्थे च केवल विशेषणतयापि दृश्यन्ते तत्र तत्र ।

**॥ इति प्रथमोऽध्यायः ॥**

५१. भा. पृ. ४८३ ४२. भा. पृ. ५५९
५३. भा. पृ. ७५३

# द्वितीयोऽध्यायः

# दर्शनान्तरेषु आनन्त्यनिरूपणम्

## पीठिका

भरतखण्डे दर्शनानि नाद्यतनानि नापि ह्यस्तनानि किं तु बहुपुरातनानि इति इतिहासकारा संभावायन्ति। दर्शनानि बहुरीत्या वर्गीकृतानि इति विमर्शनग्रन्थावलोकनेन दरीदृश्यते। तथापि दर्शनानि आस्तिकनास्तिकभेदेन द्विविधानीति प्रायः सर्वे अभ्युपयन्ति।

बहुषु दर्शनेषु आनन्त्यविचारः तन्निरूपणं नैकप्रकारेण, (विषयानुसारेण स्वस्वमतानुसारेण) कृतम्। दृष्टान्ततया आस्तिकदर्शनेषु पातञ्जलयोगं, न्यायवैशेषिकं, अद्वैतं, विशिष्टाद्वैतं, नास्तिकदर्शनेषु जैनमतमेकं चास्मिन् प्रबन्धे निरूप्यते। चार्वाकबौद्धयोः पदार्थबाहुल्याभावात् केषुचित् अद्वैतमूलदर्शनेषु ब्रह्मातिरिक्तपदार्थानङ्गीकारात् तेषु आनन्त्यविचारावसराप्रसक्त्या तानि दर्शनानि न स्पृष्टानि।

## तत्र आस्तिकदर्शनेषु

## २.१ पातञ्जलयोगदर्शने आनन्त्यनिरूपणम्

### २.१.१ दर्शनपरिचयः

सेश्वरसाङ्ख्यप्रवर्तकपतञ्जलिमतं योगदर्शनमिति ख्यातम्। तद्विरचितयोगसूत्राणि पञ्चनवत्यधिकशतसङ्ख्यानि (१९५)। तानि सूत्राण्यधिकृत्य केनचित् व्यासनामकेन विरचितं भाष्यमस्ति[१]।

१. पा.यो.द. पृ. १-२०६

पादचतुष्टयात्मकानि तानि च पादानि समाधि-साधन-विभूति-कैवल्याभिधानानि।

(१) ''तत्र प्रथमे समाधिपादे अथ योगानुशासनं'' इति ''योगश्चित्तवृत्तिनिरोधः'' (१-२) इत्यादिना योगलक्षणमुक्त्वा समाधिं सप्रपञ्चं निरदिक्षत् पतञ्जलिः। द्वितीये ''तपःस्वाध्यायेश्वरप्रणिधानानि क्रियायोगः''(२-१) इत्यादिना व्युत्थितचित्तस्य क्रियायोगं यमादीनि च पञ्च बहिरङ्गानि साधनानि निर्दिष्टानि। तृतीये ''देशबन्धश्चित्तस्य धारणा'' (३-१) इत्यादिना धारणा ध्यानसमाधित्रयमन्तरङ्गादिकं विवृतम् । चतुर्थे अन्तिमे पादे कैवल्याख्ये ''जन्मौषधिमन्त्र तपःसमाधिजाः सिद्धयः'' (४-१) इत्यादिना सिद्धिपञ्चकप्रपञ्चनपुरःसरं परमं प्रयोजनं अभिहितम्।

## २.१.२ ईश्वरस्वरूपं - साक्षात्कारश्च

योगमते प्राचीनपञ्चविंशतितत्वानि अङ्गीकृत्य ईश्वराख्यं षड्विंशति तत्वं परिगणितम्। स तु परमेश्वरः क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषः स्वेच्छया निर्माणकायमधिष्ठाय लौकिकवैदिकसंप्रदायप्रवर्तकः सन् संसारसागरे क्लिश्यमानानां जीवानां अनुग्राहकः इति योगमते वर्णितः।

**तदुक्तं सूत्रे**

[२]**''क्लेशकर्मविपकाशयैरपरामृष्ट पुरुषविशेषः ईश्वरः'' (२-२४),**

**''तत्र निरतिशयं सर्वज्ञबीजम्'' (१-२५) इति।**

योगशास्त्रानुरोधेन यम-नियम-आसन-प्राणायाम-प्रत्याहार-धारणा-ध्यान समाध्याख्याष्टाङ्गयोगैः ईश्वरसाक्षात्कारो भवति।

---

पातञ्जलसूत्राणां व्यासभाष्यातिरिक्तव्याख्याद्वयमप्यस्ति। (१) मणिप्रभावृत्तिः - (म.प्र.वृ.) गोविन्दानन्दपूज्यपादशिष्यरामानन्दसरस्वतीकृता (२) भोजदेवकृता - राजमार्तण्डाभिधा चेति। (रा.मा.)

२. पा.यो.द. पृ. २७, ३०

## २.१.३ अनन्तप्राप्तिः

**''क्लेशकर्मावरणैर्विमुक्तस्य कैवल्यपादे साधकस्य अनन्तज्ञान-प्राप्तिरुक्ता।''** तथा च सूत्रं [३]**''तदा सर्वावरणमलापेतस्य ज्ञानस्यानन्त्यात् ज्ञेयमल्पम्''**॥ ४-३१

तत्र व्यासभाष्ये च ह्रह्र

[४]**''सर्वैः क्लेशकर्मावरणैर्विमुक्तस्य ज्ञानस्यानन्त्यं''** भवति ।

तमसाभिभूतमावृतं ज्ञानसत्वं क्वचिदेव रजसा प्रवर्तितमुद्धाटितं ग्रहणसमर्थं भवति। यत्र यदा सर्वैरावरणमलैरपगतं भवति तदा भवत्यस्यानन्त्यम्। ज्ञानस्यानन्त्यात् ज्ञेयमल्पं संपद्यते। यथा आकाशे खद्योतः। यत्रेदमुक्तम्।

[५]**''अन्धो मणिमविध्यत्तमनङ्गुलिरावयत् ।**
**अग्रीवस्तं प्रत्यमुश्चत्तमजिह्वोऽभ्यपूजयत्''॥ (इति श्रुतेः)**

एवं पातञ्जलमते कैवल्यस्थाने  ज्ञानानन्त्यं साधकस्याभिहितम्॥

**पातञ्जतमतविमर्शः**

**''योगः चित्तवृत्तिनिरोधः''** (पा.सू. (१)-१-२) इति वदन्तो पातञ्जलाः धर्ममेघाख्यसमाधौ मलानां नाशे ज्ञानसत्त्वं अनन्तं भवति इत्याहुः। तथा च सूत्रं

**''तदा सर्वावरणमलापेतस्य ज्ञानस्यानन्त्यात् ज्ञेयमल्पम्''। ४-२१**

तेषामयं भावः। आत्मस्वरूपं ज्ञानं सत्वरूपं च तच्च ज्ञानसत्त्वं क्वचिदेव रजसः प्रवर्तितं उद्धाटितं सत् ग्रहणसमर्थं भवति। यदा च समाधिमाहात्म्यात् क्लेशकर्मादीनामपगमः तदा तमसा रजसा च विमुक्तं ज्ञानसत्त्वं सर्वविषयकं सत्

३. पा.यो.द. पृ. २०२
४. पा.यो.द. पृ. २०२
५. पा.यो.द. पृ. २०२

अनन्तं भवति। सर्वविषयकत्वे कथमानन्त्यं चेत् सर्वविषयकस्यास्य ज्ञानस्य पुरतः सर्वं ज्ञेयं अल्पं सम्पद्यते यथा आकाशे खद्योत इति।

तदिदं न विचारसहम्। भवतु नाम ज्ञानं आत्मस्वरूपं सत्वरूपं च। अथापि समाधिना मलापकरणमात्रेण तस्यानन्त्यं इति तु अयुक्तमिव। यतो हि स एष समाधिः यदि सर्वान्तर्यामिविषयकः स्यात् तदा सर्वान्तर्गतब्रह्मसाक्षात्कारेण सर्वं विज्ञातं स्यादपि। ''एकेन विज्ञातेन सर्वं विज्ञातं स्यात् इति श्रुतेः''। समाधिविषयस्य अन्तर्यामितत्त्वस्य ब्रह्माख्यस्य अनङ्गीकर्तॄणां पातञ्जलानां मते निर्विषयकं समाधिमात्रेण ज्ञातस्य सर्वविषयकत्वं आनन्त्यं च दुष्प्रतिपादम्।

किं च केवलसमाधिना मलनिस्सरणमपि न भवेत्। मलनिस्सरणस्य हि अहंममाभिमाननिवृत्तिः कारणं। यथोक्तं भागवते[६]

''अहंममाभिमानोत्थैः कामक्रोधादिभिर्मलैः।
वीतं यदा मनः शुद्धं अदुःखमसुखं शिवम्॥'' भा.(३)-२६-१६

अतः समाधिमात्रेण सर्वावरणमलापेतं ज्ञानं इत्येतदपि अङ्गीकारार्हं न भवति॥

## २.२ न्यायवैशेषिकमते आनन्त्यनिरूपणम्

### २.२.१ न्यायमतपरिचयः

अस्मिन्मते द्रव्यगुणकर्मसामान्यविशेषसमवायाभावाः सप्त पदार्थाः परिगणिताः। तत्र द्रव्याणि नवैव। तानि **''पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसि''**[१]। इति।

### २.२.२ विशेषानन्त्यम्

तत्र नित्यद्रव्येषु विशेषास्तु अनन्ता वर्तन्ते इत्याहुः।

---

६. भा. पृ. १४१

१. त.सं. पृ. २

**तदुक्तम् तर्कसङ्ग्रहे**[२]

**"नित्यद्रव्यवृत्तयः विशेषास्त्वनन्ता एव"** इति।

तदुक्तं तर्कदीपिकायाम्

**"पृथिव्यादिपरमाणुचतुष्टयस्य परमाणवः आकाशादिमनोऽन्तपञ्च-द्रव्याणि नित्यद्रव्याणि"** इति।

**न्यायबोधिन्यां च**[३]

**"नित्यद्रव्येषु परमाण्वादिषु वर्तमानाः। अत एव व्यावर्तका इतरभेदानुमितिहेतवः । नित्यद्रव्यवृत्तित्वरूपपक्षधर्मताप्रयोज्येतरभेदानु-मापकताशालिन इत्यर्थः।"**

## २.२.३ परमाणूनामानन्त्यम्

एते (परमाणवः) पृथिव्यादिभूतचतुष्टयानामनित्यद्रव्याणां परमाणु-रूपान्त्यावयवमात्राः अनन्ताः। [४]तेषु विद्यमानाः विशेषाः स्वत एव व्यावृत्ताः इति अवश्यमङ्गीकार्यम् । यदि परमाणुगतानां नानाविशेषाणां व्यावर्तकभूतं पदार्थान्तरं अङ्गीक्रियते तर्हि तेषां व्यावर्तकानां व्यावृत्यर्थं व्यावर्तकान्तरं अङ्गीकर्तव्यमिति अनवस्था प्रसज्यते। अतः विशेषाः विशिष्यन्ते अन्यस्मात् व्यावर्त्यन्ते स्वयमेव इति व्युत्पत्या स्वतो व्यावृत्ता सिद्धाः।

**प्रशस्तपाद भाष्ये च**

**नित्यद्रव्यवृत्तयोऽन्त्या विशेषाः। ते खलु अत्यन्तव्यावृत्तिहेतुत्वात् विशेषा एव।**

**जीवानन्त्यम् मनसामानन्त्यं च**

आकाशादिपञ्चकमध्ये आत्मा जीवेश्वरभेदेन द्विविध उक्तः। (ईश्वरस्तु एक एव सर्वज्ञः [५]अनुमानसाध्यः वेदोक्तश्च "यः सर्वज्ञ" इति।) तत्र जीवात्मानः

२. त.दी.पृ. ६, ६१
३. न्या.बो.पृ. ६१
४. प्र.पा.भा. पृ. ३६
५. त.सं.दी. पृ १२, १३

अनन्ताः । तदुक्तं तर्कसङ्ग्रहे

**ज्ञानाधिकरणमात्मा। स द्विविधः परमात्मा जीवात्मा च। जीवात्मा प्रतिशरीरं भिन्नो विभुर्नित्यश्च** इति।

....... सुखदुःखादिवैचित्र्यात् प्रतिशरीरं भिन्नः। (तर्कदीपिका)

[६]जीवास्तु प्रतिशरिरं भिन्नत्वात् अनेके अनन्ता वा।

तथैव मनोऽपि अनन्तं प्रत्यात्मनियतत्वात्। [७]तन्मनः परमाणुरूपं नित्यं च।

तदुक्तं तर्कसङ्ग्रहे

सुखाद्युपलब्धिसाधनमिन्द्रियं मनः। तच्च प्रत्यात्मनियतत्वादनन्तं परमाणुरूपं नित्यं च।

[८]प्रशस्तपादभाष्यव्याख्याने न्यायकन्दल्यां च - ''ब्रह्माण्डलोके जीवाना-मनन्तत्वात् अशून्यता। अन्त्यशून्यातिरिक्तत्वे युज्यते परमाणुवत्॥'' इत्युक्तम्

## २.२.४ कालाकाशानन्त्यम्

[९]न्यायमते **''अतीतादिव्यवहारहेतुः कालः।''** **''स चैको विभुर्नित्यश्च''** इत्युक्तम्। अपि च **''सर्वाधारः कालः सर्वकार्यनिमित्तकारणं च''**[१०] इत्यप्युक्तम्।

[११]प्रशस्तपादभाष्ये च - **''क्षणलवनिमेषकाष्ठाकलामुहूर्तयामाहोरात्रार्द्धमासमासर्त्वयनसंवत्सर युगकल्पमन्वन्तरप्रलयमहाप्रलयव्यवहारहेतुः। .........''** इति उक्तम्

आकाशस्य शब्दगुणकत्वरूपलक्षणमुक्त्वा तच्च एकं विभु नित्यं चेत्युक्तम्।

---

६. त.दी. पृ. १२,१३
७. त.सं. पृ. १३
८. प्र.पा.भा. पृ. २१३
९. त.सं. पृ. ११
१०. त.दी.पृ.
११. प्र.पा.भा. पृ. १५६

भूताकाशभिन्नं अव्याकृताकाशं न हि तेऽभ्युपयन्ति।

अनेकत्वे मानाभावादिति भावः। सर्वभूतद्रव्यसंयोगित्वं विभुत्वम् इति न्यायबोधिनी । एकत्वादेव सर्वत्रोपलब्धेः विभुत्वमङ्गीकार्यम् इति।

एवं न्यायमते पदार्थानां मध्ये (१) विशेषस्य, (२) आत्मनोर्मध्ये जीवात्मनः, (३) मनसश्च्य संख्यातः आनन्त्यमुक्तम्। द्रव्येषु आकाशकालयोः नित्यत्वं विभुत्वं (कालतः देशतः आनन्त्यं) चोक्तम्।

## २.२.५ न्यायवैशेषिकमतविमर्शः

तार्किकाः परमाणुषु तथा आकाशादिषु नित्यद्रव्येषु च भेदसिद्धये विशेषाख्यं स्वतो व्यावर्तकं धर्मं अङ्गीकुर्वन्ति। तत्र विशेषविषये एवं कारणं ब्रूयुः।

घटादिषु भेदसिद्धिः तदवयवभेदेनैव भवति। परं तु जलपरमाण्वोः पृथिवीपरमाण्वोस्तु परस्परं भेदसिद्धिः तदवयवभेदेनेति वक्तुं न शक्यते। परमाणूनां अन्त्यावयवत्वेन तेषां भेदकावयवान्तराभावात्। अतः परमाणुषु परस्परं भेदसिद्धये विशेषाख्यं पदार्थान्तरमङ्गीकरणीयं इति तेषां हृदयम्।

एतन्नैव युज्यते। यतो हि परमाणूनामपि सावयवत्वस्य ''अविभागः पराणुता'' इत्यनुव्याख्यानव्याख्यायां सुधायां भागवते, च प्रतिपादितत्वात्।

चरमस्तु विशेषाणां .......... (३)-१२-१

श्रुतत्वेन तेषामपि भेदका अवयवाः वर्तन्त एव। तथा च यथा घटादिषु भेदसिद्धिः अवयवभेदेन भवति तथा परमाणूनामपि तदवयवभेदेन भवति। अतः परमाणोः निरवयवत्वमङ्गीकृत्य तत्र भेदसाधनाय विशेषाङ्गीकरणस्य अनावश्यकत्वात् तार्किकमतमयुक्तम्। किं च परमाणुः सावयवः पदार्थत्वात् सर्वदेश(दिक्) सम्बन्धात् घटवत् इति अनुमानविरोधाच्च। तथा च विशेषस्यैव अयुक्तत्वेन तदानन्त्यं तु दूरतोऽपास्तम्॥

# २.३ अद्वैतमते आनन्त्यनिरूपणम्

## २.३.१ मतपरिचयः

अद्वैतमतं सङ्क्षेपतः एवं सङ्गृहीतं तत्संप्रदायविद्भिः।

**''ब्रह्म सत्यं जगन्मिथ्या जीवो ब्रह्मैव नापरः।''**

एवमेतन्मते ब्रह्ममात्रं सत्यं तत्त्वं अन्यज्जीवजगत् सर्वं व्यावहारिकसत्तास्पदं न तु तत्त्वतः अनुभूतम्। अध्यासमात्रम्। अध्यासो नाम अतस्मिन् तद्बुद्धिः। तदुक्तं भाष्यकारैः स्वीयाध्यासभाष्ये[1] ।

## २.३.२ अध्यासस्वरूपम्

**''एवमयं अनादिरनन्तः नैसर्गिकोऽध्यासः मिथ्याप्रत्ययरूपः कर्तृत्वभोक्तृत्वप्रवर्तकः सकललोकप्रत्यक्षः''** । इति।

तथा च दृश्यमानसकलजीवजगज्ज्ञातं मिथ्याप्रत्ययरूप एव, यज्ज्ञानं अद्वैतसाक्षात्कारानन्तरमेव गोचरयति तत्पर्यन्तं सर्वानुभवं सत्यमेव इति मन्यते सर्वो लोकः। सैव हि व्यावहारिकसत्ता नाम।

## २.३.३ ब्रह्मलक्षणम्

पारमार्थिकं ब्रह्म तु [2]**''सत्यं ज्ञानमनन्तं ब्रह्म, विज्ञानमानन्दं ब्रह्म''** इत्यादि श्रुतिभिः लक्षितम्। तथा च ब्रह्मणो आनन्त्यरूपलक्षणं (देशतः कालतः वस्तुतश्च अध्यासस्याप्यानन्त्यं (येन जगद्व्यापारादिकं अविद्यया प्रवर्तते) उक्तमद्वैते। अयमेव हि अध्यासः अनादिरनन्तः येनैव सकललौकिकवैदिक-प्रमाणप्रमेयव्यापाराः प्रवृत्ताः। विधिनिषेधमोक्षपरं सकलशास्त्रमपि

---

१. शा.सू.भा. पृ. ४, भा.द. पृ. ३२५-३२६ २. शां.तै.भा. पृ. २८०-२८८

''सत्यं ज्ञानमनन्तं ब्रह्म'' इत्यत्र अनन्तशब्दार्थः अद्वैतवादिभिः यथा निरुप्यते तथा एतत् श्रुत्यर्थनिरूपणावसरे उक्तम्।

अध्यासमूलमेव। तदुक्तं अध्यासभाष्ये। [३]**''तमेतमविद्याख्यं आत्मानात्मनो-रितरेतराध्यासं पुरस्कृत्य सर्वे प्रमाणप्रमेयव्यवहाराः लोकिकावैदिकाश्च प्रवृत्ताः। सर्वाणि च शास्त्राणि विधिनिषेधमोक्षपराणि''।**

### अद्वैतमतविमर्शः

अत्रानन्त्यविषये तत्त्ववादिनां बहुशः संवाद एव दृश्यते। अस्ति खलु ब्रह्मणः देशत आनन्त्यं कालतश्च सर्वगतत्वात् नित्यत्वाच्च। किं तु वस्तुत आनन्त्यविषये अस्ति विवादः। सर्ववस्तुवृत्तित्वं यदि तत् स्यात् तर्ह्यविवाद एव। नेदमङ्गीकुर्वन्ति ते। सर्ववस्त्वभिन्नत्वं तदभिमतम्। तस्य च ''सत्यं भिदा, भेदव्यपदेशाच्चान्यः, उत्तमः पुरुषस्त्वन्यः'' इत्यादि प्रमाणसम्प्लव विरुद्धत्वात् नाङ्गीकारार्हता।

अध्यासस्य च अनन्तत्वं चिन्त्यम्। अध्यासस्यैव निराकृतत्वात् द्वैतमते । अङ्गीकृतेऽप्यध्यासे अनादिभूतः स अध्यासः ब्रह्मप्रमाबाध्य इति कथमनन्तत्वं तस्य। न च संख्यातोऽनन्तत्वमिति वाच्यम्। अनादिशब्दसमभिव्याहृता-नन्तशब्दस्य कालतो अनन्तत्ववाचकत्वध्रौव्यात् (नियमात्)।

## २.४ विशिष्टाद्वैतमते आनन्त्यनिरूपणम्

### २.४.१ मतपरिचयः

विशिष्टाद्वैतमते सर्वकारणकारणं सर्वचेतनाचेतनविशिष्टः नारायण एव परममुख्यं प्रमेयम्। तदुक्तं **वेङ्कटनाथीयन्यायपरिशुद्धौ - (वें.न्या.प.)**

[१]**''यद्विषयेण भ्रमेण संसरामः यद्विषयेण तत्त्वज्ञानेन अपवर्ज्येमहि तदिह नः प्रकर्षेण मेयं प्रमेयम्।''**

---

३. शां.सू.भा. पृ. २

१. भा.द. पृ. ३६६-३६८

अपि च [२]**न्यायसिद्धाञ्जने तैरेवोक्तम्** - (न्या.सि.)

**''अशेषचिदचित्प्रकारं ब्रह्म एकमेव तत्त्वं तत्र प्रकारप्रकारिणोः प्रकाराणां च मिथोऽत्यन्तभेदेऽपि वैशिष्ट्यादिविवक्षया एकव्यपदेशः तदितरनिषेधश्च'' इति तत्त्वं प्रादर्शि ।**

[३]किं च श्रीभाष्ये ब्रह्म एवं वर्णितम्। तद्यथा

**''ब्रह्मशब्देन च स्वभावतो निरस्तनिखिलदोषो अनवधिकातिशयासंख्येयकल्याणगुणगणः पुरुषोत्तमो अभिधीयते''।**

## २.४.२ नारायणः एव अनन्तगुणपरिपूर्णः।

[४]गीताभाष्येऽपि च नारायणस्यैवानन्तगुणवत्त्वमुक्तं भाष्यकारैः। परिशिष्टे (१०) दत्तं (पृ. २४८)

## २.४.३ शेषशेषिभावः

एतत्सिद्धान्ते चिदचिदीश्वर इति तत्त्वत्रयमङ्गीकृतम्। चिदचित्सर्वं नारायणाख्यब्रह्माधीनं शेषशेषिभाववच्च। चेतनाचेतनात्मकं सर्वं ब्रह्मणा सह अविनाभावसम्बन्धवत् इत्यर्थः। अर्थात् चिदचिदात्मकं सर्वं शरीररूपेण अवतिष्ठते। ईश्वररस्तु शरीरी तत्तन्नियामकः अन्तर्यामी भवति। अयमेव शरीरशरीरीभावः शेषशेषिभावशब्देन कथ्यते।

## २.४.४ प्रमेयं द्विविधम्

[५]किं च प्रमेयं द्रव्याद्रव्यभेदेन द्विविधम्। जडद्रव्यं पुनः अव्यक्तकालभेदेन

---

२. भा.द. पृ. ३६६-३६८

३. भा.द. पृ. ३६६-३६८

४. रा.गी.भा. पृ. ४१

५. भा.द. पृ. ३६६-३६८

द्विविधम्। प्रत्यक्तत्त्वं जीवेश्वरभेदेन द्विविधम्। पराक्तत्त्वं नित्यविभूति-धर्मभूतज्ञानभेदेन द्विविधम्। अद्रव्यं सत्वं रजस्तमःशब्दस्पर्शरूपरसगन्ध-शक्तिसंयोगभेदेन दशविधम्।

## २.४.५ जीवाः अनन्ताः

[६]तत्र जीवास्तु चैतन्यस्वरूपाः ज्ञानगुणकाश्च। देहेन्द्रियादिभिः भिन्नाः नित्याः सत्यभूताः अनन्ताः ईश्वराद्भिन्ना सर्वावस्थास्वपि ईश्वरयुजश्च।

[७]यज्जडद्रव्यं कालः सः क्षणलवदिनादिभेदवान् परिणामी च। कालोऽपि ब्रह्माधीन एव। कालविषये भाष्यकाराः एवं ऊचिरे।

## २.४.६ कालोऽनन्तः

**''कालस्य पदार्थविशेषणतयैव प्रतीतेः तस्य पृथगस्तिनास्तित्वादयः न वक्तव्याः।''** (श्री. भाष्ये. - २-२-३१) कालो नित्यः अनादिः अनन्तश्च। स च नित्यविभूत्या संबन्धवांश्च । तदुक्तं वेदार्थसङ्ग्रहतात्पर्यदीपिकायाम्। वे.सं.ता.दी. (१०८)

[७]**''स्वयं परिणामी प्रकृतेः परिणामहेतुः त्रिगुणरहितः जडद्रव्यविशेषः''** (कालः) इति। स्वयं परिणामी नाम **''सर्वोत्पत्तिस्थिति-विनाशादिसर्व परिणामनिमित्तभूतः''** इति।

एतन्मते **''उपाधिविशेषविशिष्टः आकाश एव काल''** इति केषाञ्चिन्मतं नाङ्गीक्रियते। किं तु आकाशाद्भिन्न एव काल इति स्वीक्रियते।

---

६. भा.द. GOK पृ. ३६८

७. भा.द. पृ. ३७२, वि.को. IV पृ. १८०

## २.४.७ अव्याकृताकाश एव प्रकृतिः

भूतकाशः अव्याकृतकाश इति आकाशद्वयमभ्युपगच्छन्ति विशिष्टाद्वैतिनः। [८]अव्याकृताकाशः प्रकृतिरेवेति तेषां मतम्।

**''कस्मिन्नु खलु आकाशः ओतश्च प्रोतश्चेति''** श्रुतेः (ब्रु.उ. ५-८-६) इति तत्र प्रमाणम्।

पञ्चद्रव्येषु आदिमं द्रव्यम् आकाशद्रव्यम्। [९]आकाशस्वरूपमुक्तं यतीन्द्रमतदीपिकायाम्।

[९]**''आकाशः प्रत्यक्षः शब्दमात्रगुणको अवकाशहेतुः। ''नीलं नभ'' इति प्रतीतेः पञ्चीकरणप्रक्रियया रूपवांश्च। एतेनाकाशस्याजन्यत्व-निरासः। सूर्यपरिस्पन्दादिभिराकाशस्यैव प्राच्यादिव्यवहारोपपत्तौ दिगिति न पृथग्द्रव्यकल्पनम्''।**

प्रकृतिजन्यतामसाहङ्कारात् पञ्चभूतानि जातानि। तत्र तामसाहङ्कारात् शब्दतन्मात्रं तस्मादाकाशोत्पत्तिरिति एतन्मतम्।

[१०]तथा चैतन्मते आकाशस्य नित्यत्वं विभुत्वं आनन्त्यं वा नाभिप्रेतमिति तत्त्वम्।

[११]कालस्वरूपविषये एतन्मते पक्षद्वयमस्ति। तदुक्तं तत्त्वमुक्ताकलापे (त.मु.क.६९)

**''कालस्योपाधि......... सर्वकार्ये निमित्तम्।''**

तस्यार्थः विवृतः कोषे - यथा ।

---

८. वि.को. पृ. १८०

९. वि.को. पृ. १०

१०. वि.को. पृ. २४

११. वि.को. पृ. १८४-१८६

**‘‘नित्यस्यापि कालस्य द्रव्यान्तराणामिवावस्थाभेदैः सर्वमिदं स्यात्। अवस्थाश्चात्रोपाधिसम्बन्धमात्ररूपा इति लघीयान्पक्षः’’।**

**पक्षान्तरमाह**

**‘‘यादवप्रकाशैः ........ अतो यत्र कालस्तत्र सर्वत्र परमात्माऽस्तीति तस्य कालव्यापकत्वम्’’ ।**

एवं विशिष्टाद्वैतमते ब्रह्मणो अनन्तगुणपूर्णता उक्ता।

## विशिष्टाद्वैतमतविमर्शः

एतदवमर्शनेन इदं तावत्सुव्यक्तं यदेतन्मते नित्यः कश्चन आकाशः नास्तीति यतः अव्याकृताकाशं स्वरूपत एव ते नाङ्गीकुर्वन्ति। अव्याकृताकाशः प्रकृतिरेवेति तद्वचनात्। प्रकृतेश्च विकारयुक्तत्वात् कूटस्थ आकाशः प्रकृतिरूपः भवितुं नार्हति। भूताकाशस्तु अङ्गीकृतश्चेदपि स न नित्यः।

**‘‘तस्माद्वा एतस्मादात्मनः आकाशः सम्भूतः’’** इत्यादेः उत्पन्नभावस्य च नाशावश्यम्भावात्। (श्रुतेः ..........)। इत्थं च अनादिरनन्तः आकाशः तन्मते नास्त्येव।

ततश्च आकाशानन्त्यं प्रतिपादकं

**‘‘अनन्तमेतदाकाशं सिद्धदैवतसेवितम्।**
**रम्यं नानाश्रयाकीर्णं यस्यान्तो नाधिगम्यते’’॥**

-मोक्षधर्मे - १८८-२२, २३

इत्यादि प्रमाणविरोधः अस्य मतस्य स्फुट एव॥

## २.५ नास्तिकदर्शनेषु जैनमते आनन्त्यनिरूपणम्

### २.५.१ मतपरिचयः

स्याद्वादिजैनमते जीव-अजीव-आस्रव-संवर-निर्जरा-बन्ध-मोक्षा इति [१]सप्तपदार्थाः तत्त्वानि वेति केचन। तैः सह पुण्यपापे योजयित्वा [२]नवपदार्थाः अङ्गीकृताः कैश्चित्। तथापि सङ्क्षिप्ततया एवं वक्तुं शक्यते।

### २.५.२ विश्वं अनाद्यनन्तम् - जीवा अनन्ताः

अनाद्यनन्तमिदं विश्वं जीवाजीवभेदेन द्विविधम्। जीवास्तावदनन्ताः शाश्वताश्च। जीवाः देव मनुष्य - पशु - पक्षि - कीट - वृक्ष - लतादिस्वरूपा भवन्तः, सर्वे यद्यपि नित्यशुद्धास्तथापि कथञ्चिदनादिकर्मबन्धात् संसारे बद्धास्सन्तः स्वस्वरूपस्थानन्तज्ञानदर्शनवीर्यसुखैः वञ्चिता दृश्यन्ते। जीवाः पुनः मुक्तामुक्त भेदेन द्विविधाः। मुक्तास्तु अनन्तज्ञानदर्शनसुखवीर्यवन्तश्च।

जैनाः जीवानन्त्यमङ्गीकुर्वन्ति। [३]सर्वेऽपि जीवाः शाश्वताः समानाश्च।

जीवभिन्नमजीवद्रव्यम्। अजीवं पुद्गलधर्माधर्माकाशकालभेदेन पञ्चविधम्।

जीवाजीववृत्यर्थं अवकाशप्रदमाकाशम्। इदं सर्वव्यापि अनन्तं च। तन्मते आकाशं द्विविधम् लोकालोकभेदेन। लोकाकाशे जीवपुद्गलाकाशधर्माः विद्यन्ते। लोकादुपरि भवः अलोकाकाशः यत्र धर्मादयो न वर्तन्ते। अयमाकाशो निरवधिः। दैशिको कालिको वा अन्तस्तस्य नास्ति। तथा हि तद् वचनम्।

### २.५.३ कालोऽनन्तः

[४]**''धर्मादियुक्तो लोकोऽलोकस्तेषां वियोगतः। निरवधिः स्वयं तस्यावधित्वं तु निरर्थकम्''**॥ प्रतिवस्तुपरिणामकसाक्षात्सहकारि कालद्रव्यम्। तदपि अनाद्यनन्तम्। यथोक्तं तत्रैव।

---

१. त.रा.वा. पृ. १-४
२. प.का.सं. पृ. १०८
३. भा.द. पृ. २६६-२६७
४. द्र.त. पृ. १७१-१७३

''वर्तमानलक्षणः कालः पर्यवद्रव्यमिष्यते।
द्रव्यभेदात्तदानन्त्यं सूत्रे ख्यातं सविस्तरम्''॥

अलोकमानन्त्यं आकाशस्येव न सर्वगतत्वं नापि नित्यत्वं। किन्तुं जीवानामिव सङ्ख्यानन्त्यम्। तदुक्तं ह्न

**[5]धम्मो अधम्मो आगासं दब्बमिक्किक्कमाहियं।
अणन्तानि य दब्बाणि कालो पुग्गल जन्तवो॥**

## २.५.४ जीवद्रव्याण्यनन्तानि

अस्य व्याख्या भोजकवेः धर्माधर्माकाशादेकैकमतः परं त्रिकमनन्तमिति। ततो जीवद्रव्यमप्यनन्तम्। तस्य च वर्तमानपर्यायस्यार्थं कालद्रव्यमथानन्त-मित्युक्तमागमे। विस्तरस्तु ततोऽवधारणीयः।

एतत्सिद्धान्ते खण्डकालः अङ्गीकृतः न तु अखण्डकालः। तस्यास्य कालस्य स्वरूपविषये तत्र मतद्वयमुपस्थापितम्। जीवाजीवमयः कालः इत्येकः। ज्योतिश्चक्रस्य चारेण प्रपञ्चे योऽयमवस्थाविशेषः सः कालः इत्यपरः। [6]तदुक्तम् -

**जीवाजीवमयः कालः समये न पृथक्कृतः।
इत्येके सङ्गिरन्तेऽत्र धारयन्तः शुभां मतिम्। ११**

**आहुरन्ये भचक्रस्य विश्वेचारेण या स्थितिः ।
कालोऽपेक्षाकारणं च द्रव्यमित्यपि पञ्चमे ॥**

तद्वयाख्याने भोजकविनोक्तं च

''........

---

५. द्र.त.पृ. १७३, १७४, १७५

६. द्र.त. पृ. १७५-१७६, प्र.सा. पुट १७७, १७९, १८०, १८१

**''जीवोऽपि कालः अजीवोऽपि कालः तदुभयं काल एव जीवा-जीवयोः कालेनोपजीव्योपजीवकभावसंबन्धःसन्तिष्ठतः इति''** ॥ ११ ॥

''अन्ये आचार्या एवं कथितवन्तो भचक्रस्य ज्योतिश्चक्रस्य चारेण या विश्वे स्थितिरवस्थाविशेषः स काल इत्यभिधीयते।

## २.५.५ आकाशः अनन्तः जीवा अनन्ताः

आकाशादेव दिक्कार्यसिद्धत्वात् आकाशातिरिक्ता दिक् तन्मते नाभ्युपगता।

जैनमते द्रव्यसंङ्ख्या त्रिविधा सङ्ख्येया-असङ्ख्येया - अनन्ता चेति। तद्यथा लोके सागराः सङ्ख्येयाः नक्षत्राणि तु असङ्ख्येयानि अथापि नानन्तानि। आकाशभागास्त्वनन्ताः।

तत्र धर्माधर्मयोर्जीवस्य च प्रदेशाः असङ्ख्येया इत्याह सूत्रे

[७]**''असङ्ख्येयाः प्रदेशाः धर्माधर्मयोः''** (सूत्रम्)

**तत्र भाष्यं ''प्रदेशो नामापेक्षिकः सर्वसूक्ष्मस्तु परमाणोरवगाह इति''**

सूत्रं **''जीवस्य''**

भाष्यं **''एकजीवस्य चांसख्येयाः [८]प्रदेशाः भवन्तीति''**

जीवास्तु, सङ्ख्ययाऽनन्ताः। जीवस्य भागा अनन्ताः। आकाशस्य तु प्रदेशाः अनन्ता भवन्ति। नासङ्ख्येयाः।

सूत्रं **''आकाशस्यानन्ताः''**॥ भाष्यं **''लोकालोकाकाशस्यानन्ताः प्रदेशाः ।**

**लोकाकाशस्य तु धर्माधर्मैकजीवैस्तुल्याः ।**

---

७. त.सू. पृ. २५३-२५४

८. त.सू. पृ. २५३-२५४

९. त.सू. पृ. २९४

## २.५.६ कालोऽनन्तः

[९]**जैनाः कालस्यापि आनन्त्यं मन्वते ।**

**तथा च सूत्रं ''सोऽनन्तसमयः''** ॥

भाष्यं **''स चैष कालोऽनन्तसमयः । तत्रैक एव वर्तमानसमयः। अतीतानागतयोस्तु आनन्त्यम्॥''**

एवं जैनाः जीवालोकाकाशयोः कालस्य च आनन्त्यं वदन्ति।

## २.५.७ जैनमतविमर्शः

१. जैनमतप्रमेयाणां स्वकृतग्रन्था एव प्रमाणम्। तेषां पौरुषेयत्वात् नाङ्गीकारार्हत्वम् पुरुषदोषशङ्काकलङ्कितत्वात् प्रायः। उक्तप्रमेयाणां अपि प्रमाणसापेक्षत्वसद्भावात् तद्ग्रन्थानामप्रामाणिकत्वं युज्यत एव।

२. तदुक्तजीवानन्त्यं अङ्गीकारार्हमपि तेषां समानता भागानन्त्यं वा अङ्गीकर्तुं नैव शक्या। प्रत्यक्षबाधितत्वात् समानतायाः। स्वरूपसमानत्वे सम्प्रतिपन्नप्रमाणाभावात्। जैनग्रन्थाः नास्माकं प्रमाणम्। अनङ्गीकारात् वेदानां च तैः।

३. अलोकाकाशे धर्मादयः न वर्तन्ते इति तन्मतम्। तन्न। प्रकृतेः सूक्ष्मांशसद्भावात् अलोकाकाशे (अव्याकृताकाशे)।

४. खण्डकालेऽगीकृतेऽपि अखण्डकालः नाङ्गीक्रियते इति यत् तदपि साक्षिप्रत्यक्षविरुद्धत्वात् अपष्टु (असमीचीनम्)। कालानन्त्यस्य अखण्डकालापरनाम्नः साक्षिसिद्धत्वं सूपपादितं अनुव्याख्यानसुधायाम्।[१०]

**॥ इति द्वितीयोऽध्यायः ॥**

---

१०. ष.सु. पृ. २११६, २१५७

# तृतीयोऽध्यायः

# द्वैतदर्शने आनन्त्यनिरूपणम्

अतीताध्याये परदर्शनेषु आनन्त्यप्रकारादिकं निरूपितम्। अस्मिन्नध्याये अस्य प्रवन्धस्य हृदयभूतं द्वैतवेदान्ते आनन्त्यनिरूपणं क्रियते। तत्र प्रथमतः आनन्त्यप्रकाराः तत्तारतम्यं निरूप्यन्ते। अनन्तरं ब्रह्मणो (१) आनन्त्यत्रैविध्यं, (२) अनन्तगुणपूर्णत्वे सर्वशब्दवाच्यत्वरूपहेतुनिरूपणम्, (३) परमताङ्गीकृत-निर्गुणत्वनिराकरणं, (४) अनन्तश्रुत्यर्थः (५) आनन्त्यविषयकप्रमाणमीमांसा, (६) आनन्त्योपासनादिकं (७) हरिदाससाहित्ये तन्निरूपणादयः एतस्मिन्नध्याये विचार्यन्ते।

## ३.१ तत्र आनन्त्यप्रकाराः

प्रथमं तावत् आनन्त्यप्रकारा द्वैतवेदान्ते बहुत्र बहुप्रकारेण विचारिताः। तद्यथा। चेतनाचेतनेषु पदार्थेषु आनन्त्यप्रकारा विद्यन्ते। चेतनेषु जीवेश्वरयोः अचेतनेषु वर्ण-वेद-मन्त्र-देश-कालेषु, चेतनधर्मे, विशेषे च (भेदव्यवहार-हेतुभूते), आनन्त्यव्यवहाराः समभिव्याहृताः। एतेऽत्र प्रमाणपुरस्सरं विश्लिष्यन्ते। एतेषु पुनः तारतम्यमपि विद्यमानं निरूप्यते।

तत्र तावत् अचेतनानन्त्येषु वर्णानन्त्यं प्रथमतः चिन्त्यते।

## ३.१.१ वर्णानन्त्यम्

### १. वर्णसमान्यपरिचयः

श्रवणेन्द्रियग्राह्यं खलु अक्षरम्। तच्च कण्ठताल्वाद्यभिघातेन अभिव्यज्यते।

तन्नामान्तरं [1]''वर्णः'' इति। **प्रयोगार्हान्वितैकार्थबोधकाः वर्णाः पदम्। (सा.द. २-२) सुप्तिङ्न्तं पदमिति पाणिनिः। विभक्त्यन्ताःवर्णाः पदमिति श्रीजयतीर्थाः (प्र.प.)।**

पाणिनीशिक्षानुसारेण वर्णोत्पत्तिप्रकारस्तु एवं भवति।

**''आत्मा बुद्ध्या समेत्यार्थान् मनो युङ्क्ते विवक्षया।**
**मनः कायाग्निमाहन्ति स प्रेरयति मारुतम्।**
**सोदीर्णो मूर्ध्न्यभिहतो वक्त्रमापाद्य मारुतः।**
**वर्णान् जनयते तेषां विभागः पञ्चधा मतः॥''**

## २. वर्णसङ्ख्या

वर्णसङ्ख्या प्रतिभाषं भिन्ना। संस्कृतवर्णमालायां कति वर्णाः सन्ति इत्यत्र विप्रतिपत्तिरस्ति।[2]

(१) **''त्रिषष्टिश्चतुःषष्टिर्वा वर्णाः शम्भुमते मताः''** इति पाणिनीयशिक्षानुरोधेन त्रिषष्टिः (६३) चतुःषष्टिर्वा (६४) वर्णाःसन्ति।

[3]एकोनषष्टिवर्णैः (५९) सह वेदे श्रूयमाणाः चत्वारो यमवर्णाः (कँ खँ गँ घँ) यदि योज्यन्ते तदा त्रिषष्टिः (६३)। एतैः सह यदि ''ळ०''कारोऽपि योज्यते तदा चतुःषष्टिः (६४) वर्णाः भवन्ति।

| | | | |
|---|---|---|---|
| स्वराः | २१-२२ | अयोगवाहाः | ४ |
| वर्गीयव्यञ्जनानि | २५ | अवर्गीयव्यञ्जनानि | ८ |

(२) ऋक्प्रातिशाख्यानुसारेण अक्षरसङ्ख्या तत्र तत्र पञ्चषष्टिः त्रिषष्टिः इति दृश्यते।

---

१. अक्षराणि, मातृका, वर्णा वा इत्यपि व्यवह्रियन्ते।

२. विवक्षाभेदेन सङ्ख्याभेदो वा। १.२.३. अ.पृ. १-४६

(३) यजुर्वेदप्रातिशाख्ये षोडशस्वराः (१६) वर्गीयव्यञ्जनानि पञ्चविंशति (२५) अवर्गीयानि पुनः षोडश (१६)एवं आहत्य अक्षराणि सप्तपञ्चाशत् उक्तानि (५७)।

**(४) तन्त्रशास्त्रे तु** एकपञ्चाशद्वर्णाः अभिहिताः। तद्यथा[४]

**''स्वराः षोडश विख्याताः स्पर्शास्ते पञ्चविंशतिः।**
**व्यापका दश ते काम-धन-धर्मप्रदायिनः॥''**

श्रीमध्वभगवत्पादैः इयमेव सङ्ख्या अभिहिता ।

तदुक्तं तन्त्रसारसङ्ग्रहे :[४]

**''एकपञ्चाशद्वर्णानां (चतुर्विंशति मूर्तयः)''।**

इत्यादिना। के ते वर्णा इति चेत् - उच्यन्ते।

(१) षोडशस्वराः

अ, आ, इ, ई, उ, ऊ, ऋ, ॠ, लृ, लॄ, ऐ, ओ, औ, अं अः।

(२) स्पर्शाः - कवर्गात् पवर्गपर्यन्तम् - २५

(३) व्यापकाक्षराणि - १०

य - र - ल - व - श - ष - स - ह - ळ - क्ष

एवं तन्त्रशास्त्रे ''ळ क्ष'' इति अक्षरे स्वीकृते ये अन्यैर्न तथा।
(पाणिन्यादिभिः)।

## ३. ॐ कारात् सर्वाक्षराणि सम्भूतानि

आदिसृष्टौ ॐकारादेव सर्वाक्षराणि अभिव्यक्तानि तदुक्तं

४. तं.त.क. पृ. ११३

ब्रह्मसूत्रभाष्योदाहृत-गारुडे -

[5]''**सिसृक्षोः परमाद्विष्णोः प्रथमं द्वौ विनिःसृतौ।**
**ओङ्कारश्चाथशब्दश्च तस्मात्प्राथमिकौ क्रमात्॥**''

[6]तन्त्रसारसङ्ग्रहे च

''**अहमेकोऽखिलगुणो वाचकः प्रणवो मम।**
**अकाराद्यतिशान्तान्तः सोऽयमष्टाक्षरो मतः ॥** १-३

**स विश्वतैजसप्राज्ञतुरीयात्मान्तरात्मनाम्।**
**परमात्मज्ञानात्मयुजां मद्रूपाणां च वाचकः॥** १-४

**तद्रूपभेदाः पञ्चाशन्मूर्तयो मम चापराः।**
**पञ्चाशद्वर्णवाच्यास्ता वर्णास्तारार्णभेदिताः ॥** १-५

**द्विरष्टपञ्चकचतुःपञ्चेत्येवाटवर्गगाः।**
**................................ ॥ इति** १-६

भगवत्पादैरुदाहृतोऽयं तन्त्रसारसङ्ग्रहः विष्णुना विधये - चतुर्मुखब्रह्मणे उपदिष्टः। तत्प्रकारमेव आचार्यैः उक्तः ''अहमेकः'' इत्यादिना। अत्र अहं शब्देन विष्णुरिति मन्तव्यम्।

एतत्सार्धत्रयश्लोकाभिप्रायः एवं अनूद्यते।

अहं - विष्णुरेव अखिलगुणः। प्रणवो - ॐकारः मम वाचक एव। कीदृशोऽयं ॐकारः। अकाराद्यतिशान्तान्तः अकार-उकार-मकार-नाद - बिन्दु - घोष - शान्त - अतिशान्ता - द्यष्टाक्षरात्मकः विश्व - तैजस - प्राज्ञ - तुरीय - आत्म - अन्तरात्म - परमात्म - ज्ञानात्मनामकानामपि वाचकः । न केवलं

---

५. ब्र.सू.भा. पृ. ५ ६. तं.त.क. पृ. १२-१५

इमे किन्तु पञ्चाशद्वर्णप्रणवाष्टाक्षरैः पञ्चाशद्वर्णवाच्यपञ्चाशन्मूर्तयोऽपि विश्वादिभ्यो रूपेभ्यः अभिव्यक्ताः।

[7]तदुक्तं छलारीये व्याख्याने -

**अत्रायं विवेकः। प्रणवगताकाराद्यष्टवर्णेषु मध्ये अकारेण अकारादिषोडशस्वराख्यवर्णात्मकः एको वर्गः व्यक्तः ॥ १ ॥ उकारेण ककारादि पञ्चवर्णात्मको वर्गः ॥ २ ॥ मकारेण चकारादि पञ्चवर्णवर्गः ॥ ३ ॥ नादेन टकारादिपञ्चाक्षरवर्गः ॥ ४ ॥ बिन्दुना तकारादि पञ्चवर्णवर्गः ॥ ५ ॥ घोषेण पकारादिपञ्चाक्षरवर्गः।। ६ ॥ शान्तेन यरलवा इति चतुरक्षरवर्गः ॥ ७॥ अतिशान्तेन श ष स ह व० इति पञ्चवर्णवर्गो व्यक्त इति॥ ८ ॥''**

[8]''वर्णाभिव्यक्तिकथनप्रसङ्गे ककारषकारद्वयात्मकस्य क्षकारस्य पृथग्व्यक्त्यभावात् अनुक्तिरितिज्ञेयम्॥''

[9]''**पञ्चाशद्वर्णवाच्यास्ता वर्णास्तारार्णभेदिताः।**
**स क्षकारान्यसद्वर्णान्नृसिंहः क्षस्य देवता॥'' तं.सा.**

एवं एकपञ्चाशद्वर्णाभिव्यक्तिः प्रणवात् इति उक्तं भवति।

## ४. वर्णानन्त्यम्

भवन्तु वर्णाः एकपञ्चाशत्, त्रिषष्टिः चतुःषष्टिः पञ्चषष्टिर्वा। न तेन आनन्त्यं वर्णानां सिध्यति इति चेन्न।

वर्णानन्त्याभिसन्धिप्रकारस्तु एवं शास्त्रे प्रवृत्तम्। तदुक्तं तन्त्रसारसङ्ग्रहव्याख्यानेषु।

श्रीशेषचन्द्रिकाचार्यकृततत्त्वकाणिकायां **''अकाराद्यतिशान्तान्तः''**

७. तं.सं.छ. पृ. १३

८. तं.सं.छ. पृ. १३

९. तं.त.क. पृ. १३

‘‘**इत्यादि-श्लोकव्याख्यानावसरे ‘अकारः आदिवर्णः।** अतिशान्तोऽन्त्यवर्ण इत्यर्थः। नादबिन्दुघोषशान्तातिशान्ताख्याः पञ्चवर्णा अपि ग्राह्या इति भावः। एकपञ्चाशत्वं वर्णसङ्ख्यायां यथा न विरूद्ध्यते तथोक्तं कर्मनिर्णयटीकायां।’’

[१०]एकपञ्चाशदक्षरातिरिक्तवर्णानां सिद्धिः प्रणव एव इति प्रतिपादितं निपुणतरं छलारीये व्याख्याने। तद्यथा।

‘‘**न च नादादीनां ........ इति**
**नादाख्यवर्णस्य पञ्चाशदक्षरातिरिक्तस्याङ्गीकारविरोधाच्च। इति**

न केवलं नादवर्णस्यातिरिक्ताक्षरत्वं किं तु शान्तातिशान्तनादबिन्दु-घोषाणामपि वर्णातिरिक्तत्वं प्रतिपादितं भगवत्पादैः भागवते - तद्यथा[११]

‘‘**छन्दोमयोऽमृतमयः सहस्रपदवीं प्रभुः।**
**ओङ्कारेष्वञ्जितां स्पर्शस्वरोष्मान्तस्थभूषिताम्**’’

इत्यादि भागवते - (११)-२१-३९

[१२]तत्र तात्पर्यम् :ह्व

‘‘**त्रिमात्रमादितः कृत्वा यावच्चानन्तमात्रकाः।**
**प्रणवास्ते विभेदेन ह्यनन्ताः परिकीर्तिताः।**
**एकमात्रोत्तराः सर्वे वासुदेवाभिधायकाः।**
**तेषां व्याख्यानरूपा हि सर्वे वेदाः प्रकीर्तिताः।**
**ॐकाराख्यञ्जितास्तस्मात्सदोच्चार्याः हरेः प्रियैः।।**’’इति प्रणवमाहत्म्ये

[१३]इत्यत्र छलारीयव्याख्याने - (तन्त्रसारसङ्ग्रह) ‘‘**प्रणवा हि त्रिमात्रमारभ्य उत्तरोत्तरमेकैकमात्रा वृद्ध्या चतुर्मात्रपञ्चमात्रादिप्रकारेण अनन्तमात्रावसानका अनन्ता।...**’’ इत्यादि।

---

१०. तं.सं.छ. पृ. ७, ८
११. भा. पृ. ८२३
१२. भा.ता. पृ. ५८२
१३. तं.सं.छ. पृ. ९

अत्र मात्राशब्दस्य एकवर्णोच्चारणसमय इति अर्थः रूढ्या सिद्धः। तत्कथं मात्राशब्दस्य वर्णार्थकत्वमिति चेत्। उच्यते

मध्वविजयेऽपि[१४]

**''अनन्तमात्रान्तमुदाहरन्ति यं त्रिमात्रपूर्वं प्रणोच्चयं बुधाः''** इत्यत्र वेदाङ्गतीर्थीय व्याख्याने-[१५] (वे.ती.)

**''अनन्तमात्रान्तं अनन्ताः मात्राः वर्णाः यस्य वेदस्य स अनन्तमात्रः तेन अनन्तमात्रेण अन्तः निर्णयः यस्य सः अनन्तमात्रान्तः तमेवं भूतं उदाहरन्ति।''** इति

तदेवं भागवतव्याख्यानात् अनन्तवर्णोक्तिः प्रणवस्य सिध्यति। तथापि एकपञ्चाशद्वर्णा इति कथं चेत्। उच्यते। तदुक्तं मध्वसिद्धान्तसारे[१६]

**''ॐ कारगतेष्वकारोकारमकारेष्वनन्तानां मात्राणां अन्तर्भूतत्वेन अकारादिग्रहणेनैव तेषामपि गृहीतत्वान्न विरोधः। यद्वा सवैरुच्चार्यमाण-वर्णाभिप्रायेण प्रकृतैकपञ्चाशद्वर्णानामिति तन्त्रसारानुसारेण विभागस्य कृतत्वात् न दोष इत्यवधेयम्।**

यद्वा प्रत्यक्षरमध्येऽपि वर्णाः उच्चार्यमाणाः भवंत्येवेति तेषामानन्त्यं युज्यते। ध्वनिव्यङ्ग्याक्षरभेदसद्भावात्।

## ५. वर्णाः व्याप्ताः

भवन्तु वर्णा अनन्ता संख्यया शब्दास्तावत् अनेकवर्णोपेताः। ते तु लौकिका वैदिका इति द्विविधाः। सर्वेऽपि शब्दाः कतिवर्णात्मका इति चेत्

तदुक्तं पदार्थसङ्ग्रहे च ॥

---

१४. म.वि. पृ. १८२, १८३

१५. वे.म. पृ. १५०

१६. म.सि.सा. पृ. १८५

[१७]“**सर्वे लौकिका वैदिकाश्च शब्दाः एकपञ्चाशद्वर्णात्मकाः प्रत्येकं व्याप्ता अनादिनित्याश्च**”।

केवलवर्णानां शब्दत्वोक्तिः श्रुता। किन्तु आनुपूर्वीविशेषविशिष्टा एव शब्दाः न तु केवलं वर्णाः। “**तथा च एकपञ्चाशत्वेऽपि आनुपूर्वीविशेषविशिष्टानां लौकिकवैदिकवाक्यानां आनन्त्योपपत्तेर्न दोष इति भावः**”। (म.सि.सा.)

## ६. तार्किकमतनिरासः

[१८]“तार्किकमतरीत्या वर्णाः “आकाशविशेषगुणाः उच्चारणेनोत्पद्यन्तेऽथ नश्यन्तीत्याहुः”। तन्न साधु। प्रत्येकमपि वर्णा व्याप्ता अनादिनित्याश्च। गुणत्वे व्याप्तत्वानुपपत्तेरिति भावः॥” (म.सि.सा. १८५)

## ७. वर्णानां व्याप्तिविषये प्रमाणम् - भागवतम्

अस्ति खलु प्रमाणं वर्णव्याप्तिविषये।

**“एवं कालोऽप्यनुमितः सौक्ष्म्ये स्थौल्ये च सत्तम।**
**संस्थानभुक्त्या भगवानव्यक्तोव्यक्तभुग् विभुः॥” भा. (३)-१२-३**

तत्र तात्पर्यम्

**“देशतः कालतश्चैव वस्तुतश्च त्रिधा हरेः।**
**यथानन्त्यं न चान्यस्य प्रकृतेर्देशकालतः।**
**तथा शब्दस्य कालस्य देशानन्त्यं च कालतः।**
**कालशब्दात्मिका सैव ।** -भा.ता. (३)-१२-३

तथा चेत्थं अनुमानप्रयोगः ।

---

१७. म.सि.सा. पृ. १८५ १८. म.सि.सा. पृ. १८५

**''वर्णाः द्रव्यं व्याप्तत्वात् आकाशवत्''** ।

तस्मात् वर्णानां व्याप्तत्वात् देशानन्त्यं, सर्वदा विद्यमानत्वात् कालानन्त्यं च उक्तं भवति।

वर्णानां तदानुपूर्वीविशिष्टवाक्यानां वेदानां व्याप्त्यादिकं अनादिनित्यत्वादिकं तत्वनिर्णयादिग्रन्थेषु आचार्यैः प्रतिपादितम्। वेदानन्त्यविचारावसारे संक्षिप्यैतदुक्तं अस्माभिः अग्रे **''नित्या वेदा''**, **''यावद्ब्रह्म विष्ठितं तावती वाक्''** इत्याद्युदाहरणेन।

## ८. वर्णानन्त्योपसंहार

(१) वर्णास्तावदेकपञ्चाशत् त्रिषष्टिः चतुःषष्ठि पञ्चषष्टिर्वा विवक्षाभेदेन वेदादिषु श्रूयन्ते। अकारेकारादिमध्ये नानाविध ध्वनिव्यङ्ग्यानामनेकेषां वर्णानां अकारादिभिन्नानां सद्भावात् आनन्त्यं युज्यते ।

(२) प्रणवस्य अष्टाक्षरवत्त्वं जगदुः तन्त्रग्रन्थाः। तेषु अक्षरेषु अकारोकारमकाराणां एकपञ्चाशद्वर्णान्तरगतत्वेऽपि अन्येषां नादबिन्दुघोषशान्तातिशान्तानां पञ्चानां प्रसिद्धवर्णेषु नान्तर्भावः। ते च अतिरिक्ता एव वर्णा विज्ञेयाः। तथा च एकपञ्चाशद्वर्णा एव वर्णा इति निश्चय न शक्यकार्यः।

(३) सर्वैस्च्चार्यमाणवर्णाभिप्रायेणापि वर्णानन्त्यं शक्यते वक्तुमिति।

तदेवं वर्णानां इयत्तायाः शास्त्रेष्वदर्शनात् असङ्ख्येयत्वे एव अस्मन्मतिः पर्यवस्यति।

(४) सर्वेऽपि शब्दाः लौकिकवैदिकाः एकपञ्चाशद्वर्णात्मकाः प्रत्येकं अनादिनित्याश्च व्याप्ताश्च।

## ९. हरिदासैः कन्नडकृतिषु वर्णानन्त्यम्

श्रीविजयदासैः स्वकृतौ वर्णानन्त्यं वदन्ति। तद्यथा

तिरुवट्टारु - क्षेत्रस्तुत्यवसरे श्रीविजयदासैः[१९]

''ज्ञानवन्ता गुणानन्ता। ध्यानानन्ता दानानन्ता।

मानानन्ता मौनानन्ता। अनन्तानन्तानन्ता।

**अनन्तवर्न** विजयविठला अनन्त एन्न प्राणानन्ता। इति

अत्र वर्णानन्त्यमुक्तम्। ''अनन्तवर्न'' इत्यत्र नकारः णार्थे''

किंच वर्णानां शब्दानां च देशकालानन्त्यं अस्ति। सर्वदेशकालवृत्तित्वं तेषामङ्गीकृतं द्वैतमते।

माघकविमत्

माघमहाकविरपि स्वकाव्ये इदमद्भुतमित्यूचे।

[२०]''**वर्णैः कतिपयैरेव ग्रथितस्य स्वरैरिव।**

**अनन्ता वाङ्मयस्याहो गेयस्येव विचित्रता**''॥

शिशुपालवधे (माघे) २-७२

तत्र मल्लिनाथव्याख्याऽपि वाङ्मयस्यानन्त्यं द्रढयति। तद्यथा

वर्णैरित्यादित्रयेण ॥ कतिपयैः परिमितैर्वर्णैः पञ्चाशतैव मातृकाक्षरैः कतिपयैः सप्तभिरेव स्वरैः निषादादिभिर्ग्रथितस्य गुम्फितस्य वाङ्मयस्य शब्दजालस्य। ''एकाचोऽपि नित्यं मयटमिच्छन्ति'' इति स्वार्थेऽपि मयट्। गीयते इति गेयं तस्य गानस्येव विचित्रता रचनाभेदात् अनन्ता। अपरिमिता भवतीत्यर्थः।

---

१९. स.दा.सा (१०) पृ. ११६ (२००३)  २०. शि.व. पृ. ६३, १३८, १३९

## ३.१.२ वेदानन्त्यम्

वर्णानन्त्यविचारानन्तरं क्रमविशिष्टानन्तवर्णात्मकत्वात् वेदस्य, वेदाः अनन्ता वा न वा इति गवेषयामः।

### १. पीठिका

द्वैतमते स्वतन्त्रास्वतन्त्रभेदेन तत्त्वद्वयं अङ्गीकृतम्। स्वतन्त्रतत्त्वं परमचेतनः भगवान् विष्णुरेव। अस्वतन्त्रतत्वं भावाभावत्वेन विभज्य भावं चेतनाचेतनत्वेन विभक्तम्। पुनरचेतनं नित्यानित्यभेदेन त्रिधा विभक्तम्। तदुक्तं **तत्वसङ्ख्याने**।[1]

**''स्वतन्त्रमस्वतन्त्रं च द्विविधं तत्वमिष्यते।**
**स्वतन्त्रो भगवान् विष्णुः भावाभावौ द्विधेतरत्।**
**प्राक्प्रध्वंससदात्वेन त्रिविधोऽभाव इष्यते।**
**चेतनाचेतनन्वेन भावोऽपि द्विविधो मतः।**
**....... नित्यानित्यविभागेन त्रिधैवाचेतनं मतम्''।**

अचेतनं नित्यं अनित्यं नित्यानित्यमिति नित्यानित्यस्यार्थः। तत्र नित्याचेतनं तु एवं व्याख्यातम् तत्त्वसंख्याने **''नित्या वेदा''** इति। न केवलं वेदा एव नित्याः किन्तु उपलक्षणतया अकारादिपञ्चाशद्वर्णाः अव्याकृताकाशोऽपि नित्यमिति व्याख्यातम् तत्वसङ्ख्यानटीकायाम्[2]। यथोक्तं ह्र

''अत्र वेदा इत्युपलक्षणम्। पञ्चाशद्वर्णानां अव्याकृताकाशस्य च तथा भावादिति''।

### २. वेदलक्षणम्

#### (१) कोऽयं वेदः?

[3]**वेदास्ते नित्यविन्नत्वात्** वि.त.नि.

---

१. सं.ग्रं. पृ. २५-२८

२. त.सं. पृ ६२-६५

३. सं.ग्रं. पृ. ७८

[4]**''अत्र वेदो नाम मातृकारुपपञ्चाशद्वर्णातिरिक्त क्रमविशिष्टानन्त-वर्णात्मक''** इत्येकः पक्षः। अत्र पठिततत्वसङ्ख्यानटीकावचनमेव मानम्। अपरस्तु **''क्रमविशिष्टपञ्चाशन्मातृकात्मक एव वेदो न तु पञ्चाशद्वर्णव्यति-रिक्त''** इति। अत्र तु क्रमोत्पत्त्याभिधायकानि क्रमस्य कृतकत्वेऽपि इत्यादि-वचनानि मानम्। कूटस्थनित्यतोक्तिस्तु भूतभविष्यद्वर्तमानैरखिलैरेकप्रकारेण पठ्यमानत्वलक्षणकौटस्थ्यमादाय प्रवृत्तेति।'' सत्तत्वरत्नमाला (पुट. ५-६)

अनेन वेदलक्षणमुक्तम् भवति। भवतु वेदानां नित्यत्वं। कुतस्तेषामानन्त्यं इति चेत्। उच्यते। वेदास्तावत् नित्याः। तत्र प्रमाणं वेदा एव।

## ३. वेदाः नित्याः

[5]**''यावद् ब्रह्म विष्ठितं तावतीवाक्''** इति श्रुतिः। अस्मिन् विषये श्रीमट्टीकाकृत्पादानां वचनमेवं वर्तते।

[5]**''स ब्रह्मशब्दोक्तः परमात्मा। यस्य सहस्रपरिमिता महिमानः प्रत्येकमपि सहस्रधा अपरिमितविधाः तद्ब्रह्म यावद्देशकालव्यापितया विष्ठितं विशेषेण स्थितं वाक् वेदवागपि तावती तावद्देशकालव्यापिनी।''**
-विष्णुतत्त्वनिर्णयटीका

अनया श्रुत्या वेदनित्यत्वं साधितं भवेत्। न केवलं नित्यत्वं किन्तु व्याप्तिमपि श्रुतिर्वक्ति यथा ब्रह्मेति। तस्मात् यथा ब्रह्म सर्वत्र व्याप्तं तथा वेदा अपि सर्वत्र व्याप्ता। वेदवर्णा अपि सर्वत्र व्याप्ताः। तस्मादुक्तमाचार्यैः गीताभाष्ये-

[6]**''यद्देशतोऽनन्तं तन्नित्यमेव वेदाद्यन्यदिति।''**

[7]प्रमेयदीपिकायां च वेदादिकं **''जीवादन्यदप्यस्ति आदिपदेना-काशादयः''** इति। भावरत्नकोशे च सुमतीन्द्रतीर्थाःह्रह्र

---

४. स.र. पृ. ५-६
५. वि.त.टी. पृ. ५६-५७
६,७. गी.भा. टी.टि. (सु) पृ. २०४-२०५ (१)

**''वेदपदेन वर्णा गृह्यन्ते। आदिपदेनाकाशादयः। आकाशपदेन अव्याकृताकाशं ग्राह्यम्''** इति।

तस्माद्वेदानां सर्वत्र व्याप्तत्वात् नित्यत्वात् तेषामानन्त्यं युक्तितोऽपि सिद्धम्।

## ४. अनन्ताः वेदाः

न केवलं युक्त्या किं तु स्वयं वेदाः स्वानन्त्यं वदन्ति स्फुटतः **''अनन्ता वै वेदा''** इति। तस्मात् वेदानामानन्त्यं निरूपद्रवेण सिद्धम्। न हि स्वविषये स्वयं प्रमाणं भवति इति चेत्। सत्यं। तत्तु वेदेतरविषय एव। वेदाः स्वविषयेऽपि स्वयं प्रमाणमेव। अपौरुष्यत्वात्। तस्माद्वेदानन्त्यं वेदैरेवं सिध्यतीत्यत्र न काप्यनुपपत्तिः। [८]**''अनन्ता वै वेदा''** इत्यत्र वैदिकी आख्या श्रुता तैत्तिरीयब्राह्मणे। तद्यथा

**''भरद्वाजो'' हि .... अनन्ता वै वेदा। एतद्वा एतैस्त्रिभिरायुभिरन्व वोचेथाः। अथ त इतरदनुक्तमेव''**।। ''तैत्तिरीयब्राह्मणं''(३-१०-११-३,४)

## ५. वेदानन्त्यस्य युक्त्यविरोधत्वम्

[९]सत्तत्वरन्तमालायां वेदानन्त्यविषये युक्त्याऽनुपपन्नत्वं अनूद्य तत् ईश्वराचिन्त्यशक्त्यैव तदुपपन्नमभिप्रेतम्। यद्यपि स्वयं वेदा एव आनन्त्यं वदन्ति। तस्मात् न तत्र युक्तिविरोधप्रवेशः। न च युक्तिविरोधमात्रेण वस्तुस्थितिः अपगता भवति। स्थितस्यैव (वेदानन्त्यस्य स्वतः सिद्धत्वात्) गतिश्चिन्तनीया इत्यभिप्रायेण पञ्चाशद्वर्णजातीयानामेव परस्परं नानाविधसंश्लेषादिप्रकारेण वेदानां मितत्वपर्यवसाननिर्णीतिः न साधुः इत्युक्ता। तथा सति का गतिः वेदानन्त्ये इति चेत् उक्तं।

---

८. इयं श्रुतिः, श्रुतेश्च सायणभाष्यं च (पृ. २३४, प.२) दत्तम् । तै.ब्रा. ३-१०-११- ३,४

९. स.र. पृ. ६

**''पञ्चाशतां  च वर्णानां क्रमाद्योगैः परस्परम्।**
**अनन्तानां च वेदानां स्थितिरत्यतिकौतुकम्।**
**ईश्वराचिन्त्यशक्त्यैव घटना केवलं भवेत्।। स.र. १०**

[१०]तत्र ब्रह्मसूत्र भाष्ये

**''यत्तु युक्त्या विरुध्येत तदीश्वरकृतमेव हि''** इति । (२)१-७-२७

भारते च

''अचिन्त्या खलु ये भावाः न तान् तर्केण योजयेत्'' इति भीष्मपर्ववचनमपि युक्तिविरोधं परिहरति ।

तस्मात् वेदानन्त्यस्य युक्तिविरोधो नास्तीति सिद्धम्।

## ६. वेदार्था अपि अनन्ताः

न केवलं वेदानन्त्यमभिप्रेतं शास्त्रे । किं तु वेदार्था अपि अनन्ता एव इत्युक्तं ऋक्संहिता (ग्रन्थे - ऋग्भाष्योदाहृते)[११]

**''यादृशो योग्यतां यायात्स ज्ञेयोऽर्थस्तथा स्फुटम्।**
**अनन्तनियमैर्युक्ता अनन्तार्थविशेषिणः।।**

**वेदा इति समासेन नियमोऽयं समीरितः।।**
**ऋक्संहितागतं वाक्यमिति चान्यन्नियामकं''।** अत्र

वेदव्याख्यानं न तावत्सुकरं। वेदाभिप्रेतार्थं ज्ञातुं सर्वेषामशक्यत्वात्। विपरीतार्थकथने विपरीतफलप्रसङ्गात्। वेदानामर्थज्ञानेऽपि अनन्तनियमसद्भावात् अनन्तार्थवत्वाच्च पूर्णवेदार्थज्ञानं न सुकरम्। तस्मात् प्रमाणतः प्रतिपाद्यार्थानेव जानीयात्। तदुक्तं टीकाकारैः।

---

१०. व्या.स. (२) पृ. ९३                    ११. ऋ.भा. (१) पृ. १४१

**''योग्यतां यायात् प्रमाणतस्तत्प्रतिपाद्यैरन्वितः स्यात्। सोऽर्थः। तथा सन्। ज्ञेय इत्यर्थः।'' द्वै.ऋ.**

## ७. वेदानन्तत्वविज्ञप्त्यै अवापोद्वापौ

भगवान् बादरायणः अधिकारिणः स्वशक्त्यनुसारेण कर्माणि कुर्वंतु इति कृपया वेदानन्तत्वविज्ञप्त्यै अवापोद्वापैः ऋचां कृतवान्। तदुक्तं ऋग्भाष्ये।[१२]

**''सूक्तंत्वनारतं प्रोक्तमनुवागेककालिका।**
**अन्यथात्वं च तत्र स्यादावापोद्वापस्त्वृचाम्।।**
**वेदानन्तत्वविज्ञप्त्यै तौ चक्रे बादरायणः।।**
**अनन्तत्वात्तु देवानां प्रायः कर्मानुसारतः।**
**संक्षेपं कृतवान् देवः शिष्याश्च तदनुज्ञया।**
**अष्टकाध्यायवर्गादिभेदं च कृतवान् प्रभुः।। ऋग्भाष्यं**

तदयं ऋग्भाष्याभिप्रेतार्थः। कृतयुगे वेदास्तावत् अविभागेनैवासन्। त्रेतादारभ्य तेषां विभागः प्रचारितः। ऋङ्निगदसामाथर्वणभेदभिन्नरहिता वेदाः मूलवेदा इति प्रथिताः। ऋगादिभेदवन्तः उपवेदाः अवान्तरवेदा वा इति अभिधीयन्ते। वेदद्रष्टृभिः निरन्तरं यैः क्रमैः पठिताः ऋचः ता मूलवेदे **सूक्त**मिति कथ्यते। एककाले याः ऋचः विना विरामं कथ्यन्ते ऋषिभिः ता **अनुवाकः**। उपवेदादुद्धृता शाखाः यथा **शाकलादयः।** उपवेदे अव्यवहिततया पठिता अपि सूक्ताः। क्वचित् ऋग्वेदादिसूक्तेषु मूलवेदात् भिन्नमपि भवति। तत्र कारणं **आवापोद्वापाः**। सूक्तैकस्य मध्यस्थऋचां पाठे निष्कासनेनावान्तरवेदे पाठे तत्सूक्तं किञ्चिदूनं भवति। **तदयमुद्वापः। स्थानान्तरस्य** ऋचः तत्र सूक्ते मेलने तु अधिकर्चसूक्तं भवति। **तदयमावापः।** एवं भगवान् तत्र तत्र कृतवान् वेदविभागकाले। कुतः सर्ववेदोक्तकर्मानुसन्धाने वेदानामानन्त्यात् सर्वेषां अशक्यत्वात् कृपया तत्तद्योग्यकर्मानुसन्धानार्थ एवमुद्वापावापविभागं कृतवानिति **भाष्याभिसन्धिर्ज्ञेया।** तदुक्तं टीकायां तद्विवृतौ च।[१३]

---

१२. व्या.स. (४) पृ. ३३-३५

१३. ऋ (१) पृ. २३६, २५२

## ३.१.३ मन्त्रानन्त्यम्

वेदानन्त्यविचारानन्तरं मन्त्रानन्त्यं विचार्यते।

### १. मन्त्रजपः साधनान्यतमः

मोक्षो हि परमपुरुषार्थः। सः शक्यः विष्णुप्रसादतः। केवलया भगवद्-भक्त्या अव्यभिचारिण्या शक्योऽयं भगवत्प्रसादः। भक्तिस्तु सुदृढशास्त्रजन्यज्ञान-पूर्वकसदाचारादिसंपत्या प्राप्यते। सा पुनः श्रवणमननध्यानजन्या। ज्ञानसाधनेषु तेषु सदाचारविभागे स्ववर्णाश्रमोचितस्नानदेवपूजादिकानि एकादश्यादिव्रतान्यपि कार्यण्येव। पूजासमयेऽनन्तरं प्राग्वा तन्त्रसारोक्तमन्त्राः जप्या यथाशक्ति। मन्त्रा अपि फलदा शुद्धाचाराणाम्।

### २. मन्त्रलक्षणम्

[१]''**मननत्राणकर्तृत्वं मन्त्रसामान्यलक्षणं, गोपनीयत्वं वा।**'' तदुक्तं

''**मननं सर्वसत्वानां त्राणं संसारसागरात्।**
**मननत्राणसंयोगात् मन्त्रइत्युच्यते बुधैः॥**
**अथवा गोपनीयत्वाद्धातोर्मन्त्रयतेः परः**''॥

इति तत्वकणिकोक्तरीत्या मननं विशिष्टरीत्यासकृदुच्चारणवत्वं रक्षणीयत्वं वा मन्त्रलक्षणम्।

यद्वा मन्त्रो नाम सः यः मननात् (असकृदुच्चारणात्) अस्मान् त्रायते शास्त्र-सिद्धविचाराणां विष्णुसर्वोत्तमत्वादीनां मननं कृत्वा असकृद्विशिष्टेष्टभगवद्रूप-मन्त्रात्वृत्या मन्त्री भवति (यो मन्त्रान् आवर्तयते स मन्त्रीति कृत्वा) । सर्वेऽपि मन्त्रा फलदाः सिद्धिदाश्च यदा तत्तदक्षरसङ्ख्यालक्षजपहोमादिना उपासिता भवन्ति तदा, इति सम्प्रदायः।

---

१. तं.त.क. पृ. ६

प्रायः सर्वेषु वैदिकावैदिकदर्शनेषु तत्तद्दर्शनरीत्या मन्त्रजपविधिः श्रूयते। द्वैतमतेऽपि श्रीमदानन्दतीर्थभगवत्पादैः स्वरचिततन्त्रसारसङ्ग्रहे चतुःसप्ततिमन्त्रा उपदिष्टाः अङ्गन्यासकरन्यासध्यानमन्त्रपुरस्सरादिकम्।

## ३. मन्त्रानन्त्यम्

तत्रायं तन्त्रसारे मङ्गळश्लोकः।

''जयत्यब्जभवेशेन्द्रवन्दितः कमलापतिः।
**अनन्त**विभवानन्दशक्तिज्ञानादिसद्गुणः॥'' इति

[२]श्रीशेषचन्द्रिकाचार्यैः तत्त्वकणिकायां मङ्गलपद्यव्याख्यानावसरे **''अनन्तवि-भवानन्द''** ..... इति समस्तपदार्थं ''अनन्तविभवेत्यादिना **अनन्तमन्त्र**प्रतिपाद्यतोप-युक्तबहुरूपादि**सम्पत्तिरुच्यते**''। इति व्याख्यातम्। अनेन ज्ञायते, वस्तुतः मन्त्राः अनन्ता एव सन्ति इति।

## ४. मन्त्रानन्त्यसमर्थनम्

मन्त्रानन्त्यं कथमिति प्रश्नस्य व्याख्यानेषु विवरणाभावेऽपि प्रायः वर्णानन्त्यत्वात्, वेदानन्त्यत्वात्, सर्ववेदवर्णानां वैदिकशब्दानां भगवद्वाचकत्वात् तज्ज्ञेयमिति विवरणं सूक्तमिति मन्यते। वर्णानां वेदानां च आनन्त्यं पूर्वमेव प्रतिपादितम्। सर्ववेदाक्षराणि हरिनामानीत्यपि सम्प्रतिपन्नमेव। तस्मात् वैदिकसर्वाक्षराणां प्रत्येकमन्त्रत्वात् मन्त्रानन्त्यं नासंभवि।

## मन्त्राधिकारिणः फलं च

सर्वेषां मन्त्रोपासने ब्रह्मैव अधिकारी न तु इतरे। मानुषास्तु कतिपयमन्त्रोपासन एव अधिकारिणः मोक्षार्थम्।

[३]तन्त्रसारे स्वयं श्रीमध्वभगवत्पादैरुक्तम्

---

२. तं.त.क. पृ. २ ३. तं.त.क. पृ. २४४

**''यावतो ह्यननुष्ठाने कर्मपूर्तिर्न विद्यते।**
**तावत्समस्तं कथितमस्मिंस्तन्त्रे यथाविधि ॥''** इति अ. ३-१५०

तथा च मानुषाणां देवतानामपि साधनार्थं कतिपयमन्त्रा एव आचार्यैरुपदिष्टाः (चतुःसप्ततिमन्त्राःतन्त्रसारे)।

एतेषां मन्त्राणां पाठनजपहोमादिना मोक्षो भवेदिति आचार्याभिसन्धिः। तदुक्तं तन्त्रसारे -

[४]**''प्रीयतेऽनेन मार्गेण पूजितो मुक्तिदो भवेत्।**
**कामदश्च स्वभक्तानां भगवान् पुरुषोत्तमः॥** ३-१५७

**अयमत्राशयः।**

मन्त्रास्तावदनन्ता एव। न च ते सर्वाधिकारिकाः। साधनाशक्यत्वात् सर्वैः सर्वेषां मन्त्राणाम्। तस्मात् कतिपयमन्त्रा एव अत्रोक्ताः इति मन्तव्यम्। एतेष्वपि मन्त्रेषु न हि सर्वे सर्वैः शक्यसाध्याः। कलिकालबलात् तेषां वीर्यं तिरस्कृतम्। वासिष्ठकृष्णादिमन्त्रास्तु कलावपि वीर्यदाः फलदा एव सर्वथा। तदुक्तमाचार्यैः।[५]

**''दृष्टार्थ एव मन्त्राणां कलौ वीर्यं तिरस्कृतम्।**
**तत्राप्युद्दीप्तवीर्या हि मन्त्रा ह्यत्र प्रकीर्तिताः॥**
**वासिष्ठवृष्णिप्रवरमन्त्रास्तत्रापि वीर्यदाः॥''** अ. ४- ४२.

अनन्तमन्त्राणां ब्रह्मवाय्वोरधिकारः

मुख्यप्राणं **''प्रणवाद्यशेषवैष्णवमन्त्रोद्धारकाणां ..... संसिद्धसप्तकोटि महामन्त्राणां''** इत्येवंप्रकारेण श्री राधवेन्द्रतीर्थाः प्रातःसङ्कल्पगद्ये विशिंषन्ति। ब्रह्मवायवोः अनन्तवेदोक्तगुणोपसंहाराधिकारात् अनन्तमन्त्रोपासकौ ताविति ज्ञातुं शक्यते।

---

४. तं.त.क. पृ. २४४

५. तं.त. पृ. २८१-२८२

## ३.१.४ प्रकृतेरानन्त्यम्

अक्षर(वर्ण)चिन्तनानन्तरं (अक्षरशब्दवाच्य) प्रकृतेः आनन्त्यं विचार्यते।

### १. प्रकृतिपरिचयः

द्वैतमतरीत्या प्रकृतिर्द्विविधा चिदचिच्चेति। चित्प्रकृतिः अव्यक्ततत्त्वाभिमानिनी नारायणपत्नी रमैव। अचित्प्रकृतिः प्रधानं सा जडात्मिका। तस्याप्यभिमानिनी रमैव। प्रकृतेरानन्त्यविषयस्तु जडप्रकृतेरेवात्र चिन्त्यते।

प्रकृतिरियं विंशतिद्रव्याणां मध्ये अन्यतमा। मूलप्रकृतिरित्यपि तामाहुः। तदुक्तं[1] सन्न्यायरत्नावल्यां **'द्रव्यं प्रधानादि'।** सुधायामपि **''द्रव्यं प्रकृत्यादि''** इत्याद्युक्त्या **''द्रव्यं कर्म च कालश्च''** इत्यनुव्याख्यानं व्याख्यातम्।

प्रकृतिः नानेकविधा किं तु एकैव। तदुक्तं श्वेतश्वतरोपनिषदि।[2]

**''अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः।**
**अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः''॥**

### २. प्रकृतिस्वरूपम्

प्रकृतेः सत्वाद्यात्मकत्वे प्रमाणं तु

[3]**''सत्त्वं रजस्तम इति गुणाः प्रकृतिसंभवाः।''** इति गीतायां (१४) ५

भागवततात्पर्ये च[4]

**''द्वितीया प्रकृतिः प्रोक्ता तद्रूपा हि गुणास्त्रयः।''**

---

१. म.सि.सा. पृ. १०७
२. उ.सं. पृ. १३८
३. गी.भा. पृ. २१३
४. म.सि.सा. पृ. १०७

**"भगवत्तन्त्रता यस्यास्तद्भार्यात्वं सुरूपता।**
**उच्यते माया सा तु श्रीर्दोषयुक्ता जडा स्मृता।**
**परिणामिनी च यस्यास्तु दोषाश्चेतनता तथा॥"** भा.ता. ३

एवं प्रकृतेर्जडरूपता त्रिगुणात्मकत्वं चोक्तं भवति। इयमेव प्रकृतिः जगदुपादानम्। जगच्छब्देन कालस्य गुणत्रयस्येति ज्ञेयम्। तदुक्तं मध्वसिद्धान्तसारे - (पं. सं.)

[५]**"साक्षात्परम्परया वा विश्वोपादानं प्रकृतिः।"** [६]**"साक्षात्कालस्य गुणत्रयस्य चोपादानम्। महदादिकं प्रति च परम्परयोपादानम्।"**

## ३. प्रकृतेः देशकालानन्त्यत्वम्

[७]गुणत्रयातिरिक्तप्रकृतिर्नास्तीति केचन मन्यन्ते। तदसत्। तत्सत्वे प्रमाणसद्भावात्। तद्यथा

**"यत्तत् त्रिगुणमव्यक्तं नित्यं सदसदात्मकम्।**
**प्रधानं प्रकृतिं प्राहुरविशेषं विशेषवत्।**
**पञ्चभिः पञ्चभिर्ब्रह्म चतुर्भिर्दशभिस्तथा।**
**एतच्चतुर्विंशतिकं गणं प्राधानिकं विदुः॥"** भा. (३)-२१-११, १२

तद्व्याख्यातं विजयध्वजीये[८]

**"यत् तत्त्वं सत्वादिगुणत्रयरूपमव्यक्तं सूक्ष्मं नित्यं अविनाशि सदसदात्मकं व्यक्ताव्यक्तात्मकं ज्ञानिनः तत्त्वं प्रधानं नाम्ना प्रकृतिमाहुरित्यन्वयः।"**

**"अविशेषं अकार्यं। विशेषवन्महदादिकार्यवत्। ....... एवं जडरूपा प्रकृतिरपि प्रधानरूपाऽव्यक्ता, उपादानरूपा व्यक्ताव्यक्ता, महदादित्वेन परिणीयमाना व्यक्तैव। सर्वकार्येषु प्रधानत्वात् प्रधानं। ......"**

---

५. म.सि.सा. पृ. ९
६. म.सि.सा. पृ. १०७
७. म.सि.सा. पृ. १०८
८. भा.टी.वि. (३) पृ. ३०२

**''तत्त्वानि प्रधानकार्याणि इत्याह - पञ्चभिःपञ्चभिरिति चतुर्विंशति-तत्वैः ब्रह्म पूर्णं नातोऽधिकसङ्ख्यावत्। प्राधानिकं प्रधानकार्यम्''** ॥ श्लोक ॥ २१ ॥

एतद्व्याख्यानेन प्रकृतेः प्रधानमिति, तस्याः त्रिगुणात्मकत्वं चतुर्विंशतितत्वोपेतत्वं, तस्याः नित्यत्वं कालानन्त्यमपि सिध्यति। तस्याः स्थूलसूक्ष्मरूपाभ्यां कार्यकारणस्थितिरपि व्यक्ताव्यक्ततया इति ज्ञायते।

एतादृशप्रकृतिः नित्या व्याप्ता च। प्रकृतेः देशकालव्याप्तिरूपानन्त्यमुक्तं उपर्युक्तप्रमाणे (भागवते ३-२१-११, १२)

........नित्यं सदसदात्मक **''मित्यत्र।''**

किं च ''प्रकृतेर्नित्यत्वं च महाप्रलयानन्तरमपि पुनः सृष्टावुपादानत्वात्। व्याप्तक्षणलवादि कालोपादानत्वाद्व्याप्तत्वं बोध्यम् ।'' (म.सि.सा)[९]

[१०]तदुक्तं सत्तत्वरत्नमालायाम् -

**''महान्तं च समावृत्य प्रधानं समवस्थितम्।**
**अनन्तस्य न तस्यान्तः सङ्ख्यानं चापि विद्यते।।''**(स.र.मा. पुट १६)

## ५. प्रकृतिः देशतः व्याप्ता

प्रकृतेर्व्याप्तत्वं कथं ज्ञायते इति चेत्। उच्यते। तत्तु कार्यकारणात्मनैव। कार्यावस्थानप्रदेशे कार्यमेव वर्तते न कारणप्रकृतिः। सा तु तदन्यदेश इत्येवं क्वचित्कार्यं क्वचित्कारणमिति व्याप्तिरिति भ्रमो जायते। वस्तुतस्तु मूलप्रकृतिः सर्वकार्येषु विद्यत एत।

---

९. म.सि.सा. पृ. १०८      १०. स.र. पृ. १६

तदुक्तं सत्तत्त्वरत्नमालायां[११]

**''मूला तु प्रकृतिः सर्वकार्येषु वितता सदा।**
**हरेरचिन्त्यशक्त्यैव घटते सर्वमेव च॥''** २५

कथं तस्याः नित्यत्वमिति चेत्। **''महाप्रलयानन्तरमपि पुनः सृष्टावुपादानत्वात्।''** तदा सूक्ष्मरूपेण कारणरूपेण अवस्थितत्वात्। ब्रह्माण्डाद्बहिरपि अव्याकृताकाशे सूक्ष्मरूपेण विद्यमानत्वात् सर्वदा नित्यत्वं सेत्स्यति। प्रलयानन्तरं सृष्टौ कार्यरूपेण महत्तत्वाहङ्कारभूतादिषु स्थूलरूपेण दर्शनात् व्याप्तत्वं सर्वगतत्वं, नित्यत्वं च सर्वत्र दर्शनात् प्रकृतेः देशकालानन्त्यं सिध्यति।

तदुक्तं सत्तत्त्वरत्नमालायां[१२]

**''सत्वं रजस्तम इति त्रिविधा प्रकृतिर्मता।**
**सूक्ष्मरूपेण नित्यानि विकारित्वादनित्यका ॥''**

एतत्सर्वं मनसि निधाय आचार्यैरुक्तं[१३]

**''एवं पुनः सृजते सर्वमेतत् अनाद्यनन्तो हि जगत्प्रवाहः।**
**नित्या हि जीवाः प्रकृतिश्च नित्या कालश्च नित्यः किमु देवदेवः॥''**

-म.ता.नि. ३-३५

अस्मिन् श्लोके श्रीमदाचार्यैः न केवलं प्रकृतेर्नित्यत्वादिकमुक्तं किं तु जीवदेशकालानामपि तदुक्तम्। तेन च भगवतो नित्यत्वादिकं कैमुत्येनैव सिद्धमित्युक्तम्।

---

११. स.र. पृ. १७, १८ | १२. स.र. पृ. १६

१३. म.ता.नि. पृ. ६४

## ३.१.५ कालानन्त्यम्

वर्णप्रकृतिदेशकालाः अचेतनाः प्रकृतिः चतुर्विंशतितत्वसहिता। तद्भिन्नत्वेन कालदेशौ जडावपि तयोः स्वरूपं आनन्त्यं च चिन्त्यते।

### १. कालानन्त्यलक्षणम्

द्वैतमते कालानन्त्यमङ्गीक्रियते। कालानन्त्यं नाम कालकोटिविहीनत्वम्।[१] तदुक्तं भगवत्पादैः **भागवततात्पर्ये**

**''कालकोटिविहीनत्वं कालानन्त्यं विदुर्बुधाः''** । इति ब्रह्मतर्के

कालस्य परिच्छेदो मितिः इयत्ता नास्तीत्यर्थः। तदुक्तं तृतीयस्कन्धतात्पर्ये **यादुपत्ये ''कोटिशब्दो अवध्यर्थः। कालानन्त्यं कालतः परममहत्त्वं''।** कालस्य आदिर्वा अन्तो वा नास्तीत्यर्थः।

### २. काललक्षणम्

[२]कोऽयं कालः किं लक्षणकः?

तदुक्तं मध्वसिद्धान्तसारे - वृिवतं च पदार्थसङ्ग्रहोक्तं लक्षणं। तद्यथा

''आयुर्व्यवस्थापकः कालः''। **''शतायुर्वै पुरुषः'',** ''दीर्घायुष्मान् भव'', ''तस्यायुर्गतं'', **''आयुर्वर्धते''** इत्यादिप्रयोगव्यवहारदर्शनात् उक्तलक्षणं युक्तम्।

तदुक्तं भागवते

**''आयुर्हरति वै पुंसामुद्यन्नस्तं च यन्नसौ।**
**तस्यर्ते यः क्षणो नीत उत्तमश्लोकवार्तया''**।।

तत्तात्पर्यमपि[३]

---

१. भा.ता. पृ. १४८     २, ३. म.सि.सा. पृ. १९३, १९४

"तस्यायुषो य उत्तमश्लोकवार्तया ऋते क्षणः स नीतः वृथेति।"

## ३. कालविभागः

कालस्तु "नाखण्डैक" किं तु क्षणद्युपेतः इति द्वैतिनां मतं। तदुक्तं मध्वसिद्धान्तसारे -

[४]**"क्षणलवाद्यनेकरूपः। प्रत्येकं व्याप्तः।"** प.स.

[५]तदुक्तं तृतीयस्कन्धे भागवते

**"द्व्यणुर्द्वौ परमाणू स्यात्त्र्यसरेणुस्त्रयः स्मृतः।**
**त्र्यसरेणुत्रिकं भुङ्क्ते यः कालः स त्रुटिः स्मृतः।"**

तत्त्रिभागस्तु वेधः स्यात् तैस्त्रिभिस्तु लवःस्मृतः।
निमेषस्त्रिलवो ज्ञेय आम्नातस्तत्र यः क्षणः।
क्षणान् पञ्च विदुः काष्ठा लघु ता दश पञ्च च॥
......................................।
संवत्सरशतं नृणां परमायुर्निरूपितम्॥

## ४. कालस्वरूपम्

प्रकृत्या कालः अचेतन एव। न कालः स्वयं कमपि नियमयति। जडत्वात्। तदुक्तं द्वादशस्तोत्रे -

**"न च कर्मविमामलकालगुणप्रभृतीशं अचित्तनु तद्धि यतः।"** ३-६

## ५. कालनियामकः

परन्तु कालान्तर्गत - कालनियामक - कालाभिमानिदेवनियामकः भगवान् नारायण एव।

तदुक्तं भागवते। [६]

---

४. म.सि.सा. पृ. १९५ प्राचीनार्वाचीनकालपरिगणनक्रमः (प-३,४. पृ. २३५-२४०) दत्तः।
५. सं.ग्रं पृ. ३७६
६. भा. पृ. १०२

**''ग्रहर्क्षताराचक्रस्थः परमाण्वादिना जगत्।**
**संवत्सरावसानेन पर्येत्यनिमिषो विभुः''** ॥ (३)-१२-१३

कालनामककृष्णेनैव सर्वलोकसंहारोक्तेः गीतायां। (११-३२)

**''कालोऽस्मि लोककक्षयकृत्प्रवृद्धो लोकान् समाहर्तुमिह प्रवृत्तः''**॥

## ६. कालशब्दप्रवृत्तिनिमित्तम्

[७]**''विष्णुः सर्वगुणोद्रेकात् काल इत्यभिधीयते''।**

भा.ता. (१०)-११-३१

तथा च स्वयमदृश्यः सन् सर्वेषां आयूंषि हरति भगवान् कालनामक इत्यर्थः।

## ७. कालस्य नित्यानित्यत्वम्

मध्वमते कालस्य नित्यत्वं अनित्यत्वं नित्यानित्यत्वं चोक्तं। न तु नित्यत्वमात्रं तार्किकवत्। तदुक्तं पदार्थसंग्रहे

[८]**प्रकृत्योत्पत्तिविनाशवान् (कालः)** ॥ १८८॥

तत्र प्रमाणं **''सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधीति''** श्रुतेः। तदुक्तं अनुव्याख्याने वैशेषिकाधिकरणे-[९]

[९]**''विशेषाश्चैव कालस्य हरेरिच्छावशाः सदा।**
**सर्वे निमेषा इति हि श्रुतिरेवाह सादरम्।**

तत्त्वसङ्ख्यानेऽपि[१०]

**(नित्या वेदाः) पुराणाद्याः कालः प्रकृतिरेव च।**
**नित्यानित्यं त्रिधा प्रोक्तम् ...............।**

---

७. मा.ता. पृ. ३९५
८. म.सि.सा. पृ. १९५
९. ब्र.सू.भा. पृ. ३८५
१०. सं.ग्रं. पृ. २८

अत्र टीकायां पुराणकालप्रकृतीनां नित्यानित्यत्वमुक्तं वेदवत् कूटस्थत्वा-भावात् संसृष्टपदार्थवत् अनित्यत्वाभावात् एतेषां नित्यानित्यत्वमभिप्रेतम्। तथा च कालस्यापि नित्यानित्यत्वमुच्यते। अतीतकालस्यानित्यत्वात् (विनाशात्) कालप्रवाहस्य नित्यत्वात् अस्य (कालस्य) नित्यानित्यत्वम्।

## ८. कालस्याधिष्ठानम्

ननु कालः कालेऽस्ति न वा। नेतीति चेत् असत्वं। देशकालसत्त्वस्यैव सत्तारूपत्वात्। आद्ये आत्माश्रयप्रसङ्गः इत्युक्ते कालस्य स्वगतत्वं भगवान् आचार्यः ब्रूते। तदुक्तं [११]पदार्थसङ्ग्रहे स्वगत इति। तत्र प्रमाणम् -

**''ईशो देशश्च कालश्च स्वगता एव सर्वदा।**
**ईशाधीनौ च तौ नित्यं तदाधारौ च तद्गतौ ॥** इति श्रुतिरपि प्राह...।

**''कालस्य स्वगतत्वेन न विरोधोऽपि कश्चन।**
**स्यात्कालः सर्वदेवेति कालस्य स्वगतत्वतः''**॥ इति अनुव्याख्याने।[१२]

वैशेषिकाधिकरणानुव्याख्याने

इदानीं प्रातःकालः सायङ्कालस्तूत्तरत्रेत्यनुभववादिति भावः।

## ९. सर्वाधारः कालः

न केवलं कालः स्वगतः किन्तु दिग्वत् **''सर्वाधारः''**। इदानीं घट इत्यादि प्रत्ययबलात्। तदुक्तं प्रकृत्यधिकरणानुव्याख्याने[१३]

**''तददेतदिति सर्वं च दृश्यं वा स्मृतिगोचरम्।**
**साक्षिसिद्धेन कालेन खचितं ह्येव वर्तते।**
**तस्मान्न तं विना किञ्चित् स्मर्तुं द्रष्टुमथापि वा॥''**

---

११. म.सि.सा. पृ. १९९      १२. व्या.स. (२) पृ. ४७

इहलोके कश्चिदपि पदार्थं देशकालावच्छिन्नेनैव स्मर्तुं द्रष्टुं शक्यमिति सर्वेषां अनुभवसिद्धत्वात् कालस्य सर्वाधारत्वं वक्तुमुचितमेव। तत्र तदा तदासीत्, पाण्डवाः द्वापरे नागपुरे आसन्, रामो त्रेतायां अयोध्यायामासीत् इत्यादि प्रयोग दर्शनात् कालः सर्वाधारः इति सिध्यति। भवतु कालः सार्वाधारः स्वगतः। कालस्येयत्ता अस्ति न वा इति चेत्। उच्यते।

कालस्तावत् वर्तमानभूतभविष्यदिति त्रिकालवृत्तिमान्। न च तन्मात्रेण तस्यानित्यत्वं। यद्यपि भूतकालो गतः, भविष्यदागमिष्यति वर्तमानस्य तु क्षणिकत्वात् कालस्य कथं नित्यतेति चेत्? सत्यं। तथापि सर्वकालव्यवहारोऽपि अस्त्येव कालप्रवाहत इति। यद्यपि लोके पाण्डवानां, दुर्योधनस्य, तुरुष्काणां मुघलवंशस्य, गुप्तानां राज्यकाल इत्युक्तेऽपि जगति कश्चित्सर्वकारः सर्वदा विद्यत एव। न हि चेत् ''सर्वदा'' इति प्रयोगः कुतः कृतः। तस्यापि विद्यमानत्वात्। स एव हि कालप्रवाहो नाम। तस्मात् अविच्छिन्नपरम्परापेक्षया कालप्रवाहस्य नित्यत्वं विच्छिन्नदेशकालपरम्परापेक्षया कालस्य अनित्यत्व-व्यवहारः उभयमिलिततया नित्यत्वानित्यत्वं कालस्य युज्यत एव। एवं सर्वदेशकालसंबन्धितया सर्वद्रव्यगुणक्रियाव्यवहारात् कालः **''सर्वकार्योत्पत्ति-हेतु''**रिति वदन्ति।

[१४]**''कालात्प्रसूतिं मन्यन्ते। कालाद्भवन्ति भूतानि''।** इत्यादि श्रुतेः। सृष्टिस्थितिप्रलयात्मकचक्राधिष्ठितं जगदिदं सर्वदा वर्तते, इत्यस्य प्रामाणिकत्वात्।

द्रव्याणां कालसहकृतानां उत्पत्तिविनाशौ स्तः। यथा पुस्तकमिदं इदानीं उत्पन्नम् कालान्तरे नष्टं इति। कालो नायं धर्मादीनां, हरिश्चन्द्रस्य च कालः, आगमिष्यति पुनः सूर्यचन्द्रवंश इति कालस्य उत्पत्तिनाशादिके उच्यमानेऽपि कालः कदा आरब्धः कदा वास्य अन्तः इत्यादि प्रश्नस्य समाधानं नास्त्येव अनुमानेन। जगदादिः कदा - तत्पुनः पूर्वं किमासीत्, कदा तस्य अन्त्यः,

---

१३. ब्र.सू.भा. पृ. ३४३

१४. उ.प्र.भा. पृ. ९८

अन्तात्पश्चात् किं भविष्यति कियत्पर्यन्तं इत्यादिप्रश्नान् समाधातुं न कोऽपि शक्नोति। कालस्य अनाद्यनन्तत्वात्। तथा प्रमाणसद्भावात् शास्त्रे। साक्षी एवात्रप्रमाणम्।

## १०. कालस्यास्तित्वे साक्षिप्रामाण्यं शास्त्रंच

इमान् प्रश्नान् कुर्वतो सर्वज्ञोऽपि कविः स्वयं पूर्वं वा पश्चाद्वा कालान्तरं गन्तुं न शक्नोति। तत्पर्यन्तं वा जीवितुं अशक्यत्वात्। तस्मात् अत्र समाधानार्थं विनागमं साक्षिणं प्रत्यक्षानुमाने न प्रभवतः। इदानीं तदानीं कदा, सर्वदा इत्याद्यनुभवस्तु साक्षिण एव। न च बहिरिन्द्रियाणि कालं विषयीकुर्वन्ति साक्षिणं विना। तस्मात् साक्षिविषयः कालः। तथा अनुभवात्। अपि च साक्षी शास्त्रं चात्र प्रमाणम्। शास्त्रं अपि कालः अनाद्यनन्तः इति निश्चित्य भूयो भूयो वक्ति।

## ११. कालानन्त्ये प्रमाणम्

(१) कालो ''**अनन्त**'' इत्यत्र ब्रह्माण्डपुराणवचनं

''**भक्तिश्चानन्तकालीना परमे ब्रह्मणि स्फुटा।**
**आविमुक्तेर्विधिर्नित्यं स्वत एव ततः परम्।।**''[१५] ब्र.सू.भा.(४)-१-७

(२) ''**अनाद्यनन्तकालेषु प्रवाहैकप्रकारतः।**
**नियमेनैव ससृजे भगवान-पुरुषोत्तमः।।**''
''**अनाद्यनन्तकालीनं ससर्जात्मेच्छया प्रभुः।।**''[१६] वाराहे।। ई.भा.

(याथातथ्यतोऽर्थान् - व्यधात् शाश्वतीभ्यः समाभ्यः इति अष्टममन्त्र-व्याख्या-नावसरे - भाष्योपदाहृतम्)

(३) सृष्टिश्च प्रलयश्चैव संसारो मुक्तिरेव च।
देवऋषिप्रभृतयो लोका भूरादयस्तथा।

---

१५. ब्र.सू.भा. पृ. २४६ १६. उ.प्र.भा. पृ. ६

**अनाद्यन्तकालीनाः सर्वदैकप्रकारतः।**

**जगत्प्रवाहः सत्योऽयं नैव मिथ्या कदाचन॥**

-भा.ता. (३)-११-१३ इति स्कान्दे[१७]

तथा च जडस्यापि कालस्य अभिमानिनः देवाः सन्ति। तेभ्योऽपि नियामकः नारायणो कालनामकः। अचेतनस्य (जडकालस्य) नित्यानित्यत्वं प्रवाहतः नित्यत्वं कालस्य अनाद्यनन्तकालिकत्वं जगदाधारत्वादिकं अनेन सिद्धम्।

## ३.१.६ देशानन्त्यम्

कालानन्तरं देशो नाम आकाशः विचारपदवीमारोहति। कालस्य स्वयं भगवान् नियामकः देशाभिमानी अव्याकृताकाशाभिमानी रमा। दिशश्चापि भगवान् नियामकः। देशकालौ उभावापि सर्वाधारौ। न तौ विना न कस्यापि व्यवहारः शक्यः। तदानन्त्यप्रकारमत्र चिन्त्यते।

### १. देशलक्षणम् - विभागश्च

देशो नाम दिग्विशेषः। आकाश इत्यपि व्यवह्रियते। आकाशं द्विविधम् भूताकाशमव्याकृताकाशं चेति। पञ्चभूतेष्वन्तर्गतं भगवता सृष्टम् भूताकाशम्।

**''आत्मनः आकाशः सम्भूतः''** इति तै.उ. ।[१]

**''एतस्माज्जायते प्राणः ...... खं वायुः''**। मु.उ. (२-१-३)[२]

**''नाभ्या आसीदन्तीरक्षम्''**। -तै.आ. ३-१२-६

इत्यादयः श्रुतयस्तत्र प्रमाणानि।

---

१७. भा.ता. पृ. १३८ अर्वाचीनरीत्य देशविषये (प.५,६. पृ. २४१-२४३) पश्यताम्।

१. उ.सं.तै. पृ. २५ २. उ.स.मुं. पृ. १७

## २. अव्याकृताकाशः

**''भूताकाशभिन्नं एकं नित्यं व्याप्तं स्वगतं वा अव्याकृताशम्''।** [३]

**''सृष्टिप्रलययोर्विकारशून्या दिगव्याकृताशम्''।**[४]

अत्र दिग्रूपत्वमव्याकृताकाशस्य लक्षणम्। सृष्टिप्रलययोरित्यादि तु तत्स्वरूपकथनपरम्। सृष्टिकाले विकारः प्रलयकाले विनाशश्च नास्तीति भावः। अतस्तस्याव्याकृताकाशमिति अन्वर्थं नाम। यद्यपि तस्य पराधीनविशेषावाप्ति-रूपोत्पत्तिः प्रलये तन्नाशश्चास्ति। तत्प्रकारं तु वियदधिकरणभाष्यानुभाष्यादिषु प्रतिपादितम्।

**''आकाशे नीलिमोदेति न प्रदेशः कथञ्चन''** इत्यनुव्याख्यानोक्तश्रुतिः आकाशद्वयसद्भावे प्रमाणम्।

## ३. आकाशानन्त्ये प्रमाणम्

बृहदारण्यकोपनिषदपि आकाशानन्त्यमुखेन परब्रह्मणोऽनन्तत्वमपि किमु वक्तव्यमिति कैमुत्ययुक्तिं उपन्यस्यति श्रोत्रस्य ब्रह्मत्वोपासनावसरे । तद्यथा

''यदेव ते कश्चिदब्रवीत् तच्छृणवामेत्यब्रवीन्मे गर्दभी विपीतो भारद्वाजः श्रोत्रं वै ब्रह्मेति ....... याज्ञवल्क्य श्रोत्रमेव आयतनमाकाशः प्रतिष्ठानं त इत्येतदुपासीत काऽनन्तता याज्ञवल्क्य दिश एव सम्राळिति होवाच तस्मात् वै सम्राळपि यां कां दिशं गच्छति नैवास्या अन्तं गच्छत्यनन्ता हि दिशः दिशो वै सम्राट् श्रोत्रं श्रोत्रं वै सम्राट् परमं ब्रह्म ......।। ५ ।।

तद्व्याख्यानं बृहदारण्यकोपनिषद्भाष्यभावबोधे यथा।[५]

---

३. म.सि.सा. पृ. १००

४. म.सि.सा. पृ. ९९

५. बृ.भा..पृ. ५४०, ५४१ (भावबोधः)

‘‘दिग्गतस्य विष्णोरनन्तत्वमुपपादयति। - तस्माद्वेति। हे सम्राट् हि यस्माद्दिशोऽनन्ताः दिङ्नामा दिक्षुस्थितो विष्णुः सर्वव्यापी तस्मादेव यः कोऽपि यां काञ्चन दिशं तन्नामकभगवदधिष्ठितदिशं प्रति गच्छति अस्या दिशोऽन्तमवसानं नैव गच्छतीत्यर्थः। यदधिष्ठितदिशामेवानन्तत्वं सोऽनन्त इति किमु वक्तव्यमित्यर्थः॥’’

बृ.उ. खण्डार्थेऽपि - (श्रीराघवेन्द्रतीर्थीये)[६]

‘‘दिङ्नामा विष्णुः सर्वव्यापी। तस्माद्वै तस्मादेव यः कोऽपि यां कां च दिशं तन्नामक भगवदधिष्ठितां दिशं गच्छति। अस्या दिशो अन्तमवसानं न गच्छतीत्यर्थः। यदधिष्ठितदिशामेवानन्तत्वं सोऽनन्त इति किमु वाच्यमिति भावः’’॥

एतेन दिशोऽनन्तत्वकथनेन तत् अव्याकृता काशमेव वक्तीत्यवगम्यते।

## ४. साक्षिप्रमाण्यं आकाशविषये

अपि च अव्याकृताकाशसद्भावे साक्षी प्रमाणम्। यतोऽन्धकारेऽपि दिग्विशेषप्रतीतेः। ‘‘**अत्र**’’ ‘‘**इह**’’ ‘‘**तत्र**’’ इति हस्तप्रसरणादिव्यवहार-दर्शनात्। अव्याकृताकाशाभावे मूर्तनिबिडं स्यात्। तदुक्तमनुव्याख्याने[७] -

‘‘**यद्यनाकाशता पूर्वं किं मूर्तनिबिडं जगत्।**’’ (२)-३-१-१

तद्व्याख्यातं सुधायां[७] :ह्व

‘‘**यदि च सृष्टेः पूर्वं प्रलयेऽनाकाशता सर्वस्य मूर्तद्रव्याभावस्याभावः अङ्गीक्रियते तर्हि किं तदा मूर्तनिबिडं जगदङ्गीक्रियते**’’। इति॥

तत्पुनरनुव्याख्याने चोक्तम्।[७]

---

६. बृ.खं. पृ. १७२, १७३

७. ष.सु.(४) पृ. ४११६, ४११७

**''मूर्तसम्पूर्णता चैव यद्यनाकाशता भवेत्।**
**मूर्तद्रव्याणि चाकाशे स्थितान्येव हि सर्वदा''**।। इति

तत्र सुधाह्न

**''यदि प्रलये आकाशाभावो भवेत् तदा मूर्तसम्पूर्णता भवेदेव।'' ''इदमुक्तं भवति''**।[८]

**''एकस्मिन् पतत्रिणि पतति द्वितीयेन पतत्रिणः कुत्र पतिव्यमिति वाच्यम्। यत्रासौ नास्ति तत्रेति चेत्तर्हि येनाधिकरणैक्यपतत्रिणोऽभावः परस्य च भावो विशिष्यते तदर्थान्तरं अङ्गीक्रियते स एव प्रदेश आकाश इति कथं तदनभ्युपगमः। किं चेह पक्षी नेह पक्षीति मूर्ततदभावाश्रयतया प्रदेशः साक्षिसिद्धः कथमपह्नोतुं शक्यते।''** इति।

अव्याकृताकाशं तु नित्यं व्याप्तं स्वगतं च।[९]

**''न च सर्वाधारभूतौ देशकालौ किञ्चिद्द्रव्यात्मना विकुर्वतः। किं चाकाशोऽनादिः। अनादिर्वा अयमाकाश''** इत्यादि श्रुतेः[१०]। नायं तामसांहकार कार्यः। न हि पूर्वमाकाशो नासीत् किं तु सर्वत्र कुत्रचिद्वा घनीभाव एवासीत् इति धीर्युक्ता। **''सर्वत्र''** इत्यादिनैवावकाशनिर्देशात्।।

अपिच **''आकाशवत्सर्वगतश्च नित्यः सोऽनन्तो यथाऽनन्तोऽयमाकाशः''** इति श्रुतिः[१०], [११]महाभारतमोक्षधर्मपर्वस्थवाक्यं च अव्याकृताकाशविषये प्रमाणपदवीमारोहतः। तद्यथा भरद्वाजस्य प्रश्नः।

**''गगनस्य दिशां चैव भूतलस्यानिलस्य च।**
**कान्यस्य परिमाणानि संशयं छिन्धि तत्वतः।।''** १८८-२२

---

८. ष.सु. (४) पृ. ४११८
९. म.सि.सा. पृ. १००
१०. म.सि.सा. पृ. १०५
११. म.भा.(३) पृ. ५१७ (शांति-मोक्षधर्मपर्वणि)

भृगुरुवाच -

**''अनन्तमेतदाकाशं सिद्धदैवतसेवितम्।**
**रम्यं नानाश्रयाकीर्णं यस्यान्तो नाधिगम्यते''** ॥ अ. १८८-२२, २३,

तदिदमाकाशं साक्षिगोचरमिति भगवत्पादैरुक्तं अनुव्याख्याने - तद्यथा[१२]

**''अव्याकृतं हि गगनं साक्षिगोचरम्।**
**प्रदेश इति विज्ञेयं नित्यं नोत्पद्यते हि तत्''**

न च प्रदेश एव भूताकाशः। इत्यत्र[१३] सुधा **''रूपित्वारुपित्वपरिच्छिन्ना-परिच्छिन्नत्वश्रुतीनां सत्वात्। किं च उत्पत्यनुत्पत्तिश्रुत्योर्विरोधोऽपि आकाशद्वैतमवगमयति। व्यवस्थया अविरोधोपपत्तावनुत्पत्तिश्रुतेरौपचारि-कत्वकल्पनायोगात्। न च प्रदेशस्योत्पत्तिरुपपद्यत इत्युक्तं प्राक्''**। इति।

तस्मात् अव्याकृताकाशं नाम अपरमाकाशं अस्त्येव साक्षिगोचरम्। तदनन्तत्वं तु श्रुतिस्मृतिसिद्धिमिति उदाहृतम्।

## ५. अव्याकृताकाशस्य आनन्त्यम्

[१४]अपि च पुरुषार्थाधिकरणे व्यासमतजैमिन्यादितच्छिष्यमतयोरविरोधं, व्यासमतस्य कार्त्यस्नसत्यत्वं, इतरेषां अधिकारिभेदविवक्षां च ख्यापयन् भविष्यत्पर्ववचनमुदाहृतं यत्र आकाशानन्त्यं स्फुटतया प्रतिपादितम्।

तद्यथा -

**''यस्मात् व्यासमतं सर्वं सत्यमेव ततोऽखिलम्**
**यथाऽकाशस्त्वनन्तोऽपि व्यामो हस्तावधिस्तथा।**

१२. ष.सु.(४) पृ. ४१२२
१३. ष.सु. (४) पृ. ४१२२
१४. ब्र.सू.भा. पृ. २२२

**प्रादेशोऽपि हि सत्येन तथैतेषां मतानि तु।**

**स्वयं तु भगवान् व्यासो व्याप्तज्ञानमहांशुमान्।**

**अनन्ताकाशवत्पश्यन्निखिलं पुरुषोत्तमः।। इत्यादि भविष्यत्पर्वणि''**

अत्र पठितपुराणवाक्येषु आकाशानन्तत्वस्य दृष्टान्ततया उक्तेः अनन्ताकाशो नाम अव्याकृताकाशस्यास्तित्वमपि परोक्षेण समर्थितम्। [१५]तत्र तत्वप्रदीपकाराः एवं व्याख्यास्यन्ति। **''यथाऽकाशः कार्त्यस्नेन गृह्यमाणोऽनन्तोऽपि परिमाणभेदापेक्षया व्यामः पुरुषप्रमाणः हस्तप्रमाणः इत्याद्युच्यते सत्यवचनेनैव।''**

अत्र व्याख्याने अव्याकृताकाशभूताकाशौ **''अनन्तः''** **''व्यामः''** इति पदाभ्यां गूढाभिसन्धिना अभिप्रेतौ। यतोऽस्मिन् अधिकरणे आकाशविषयः न चर्चितः। **''सत्यवचनेन''** इति वचनेन आकाशस्य सत्यत्वमेव न तु मिथ्यात्वं व्यासस्याभिमतमित्यपि ज्ञेयम्।

[१६]भाष्यदीपिकायामपि प्रमाणव्याख्या तत्वप्रदीपानुसारेण वर्तते।

''.........। यथा आकाशोऽनन्तोऽपि **''सत्येन''** सत्यत्वेन वर्तते, तथा तत्प्रभेदाश्च ''व्यामः'' पुरुषप्रमाणः बाहुद्वयपरिमितो ........।''

प्रमाणे ''अनन्ताकाशवत्पश्यन्'' इत्यत्र भाष्यदीपिकाव्याख्यानं एवमस्ति।

**''अनन्ताकाशवदित्यस्य पूर्वेणान्वयः। भूतव्यावृत्यर्थमनन्तेति। व्याप्तेत्यर्थः।''**

अत्र भूतव्यावृत्यर्थमित्यस्य भूताकाशव्यावृत्यर्थं **''अनन्ताकाशवत्''** इति प्रमाणे प्रयुक्तः अनन्ताकाशो नाम अव्याकृताकाश एव इति व्यासाभिप्रायन्तु

---

१५. त.दी.पृ. ४०४ १६. भा.दी.प्र. (२) पृ. २५३

१७. ष.सु.(४) पृ. ४१२६

भाष्यदीपिकाकारैः विवृतः इति ज्ञेयम्। तस्मात् उक्तप्रमाणेन अव्याकृताकाशस्य आनन्त्यं भूताकाशस्य परिमितत्वं सिद्धम्॥ तदेव पुनः भाष्यदीपिकायां स्पष्टतयोक्तं अग्रे तत्रैव।

**''तथा च पुरुषोत्तमो भगवान् अनन्ताकाशवत् व्याप्तज्ञानमहांशुमान् ...''** इत्यादिना ।

एतादृशाव्याकृताकाशाभिमानी रमा। तदुक्तंमनुव्याख्याने।[१७]

**''पुरुषाव्यक्तकालानां रमैवैकाभिमानिनी''।**

माण्डूकभाष्ये च[१८]

**''कालश्चैव दिशो वेदाः प्रकृत्यात्मान ईरिताः॥''** यतो दिग्विशेष एव आकाशः अवान्तरदिगभिमानिनोऽपि षट्प्रश्नभाष्य ऐतरेयभाष्योक्तदिशा ज्ञातव्याः।

तस्मात् देशानन्त्यमुक्तं युक्तमेव।

विशेष सूचना :- देशानन्त्यविषये पुराणादिसाहित्यमनुसृत्य ब्रह्माण्डस्वरूपं रेखाचित्रप्रदर्शितं सम्भावकं भवति । चित्रमिदं परिशिष्टे द्रष्टव्यम् ॥

## ३.१.७ जीवानन्त्यम्

जीवबहुत्वे केचित् विविदिषन्ति। औपाधिकोऽयं भेदः येन जीवबहुत्वं जगति दृश्यते न तु वस्तुतः जीवा बहवः इति केचन मन्यन्ते। अत्र द्वैतिनः तत्सर्वं निराकृत्य जीवानन्त्यमेव प्रतिपादयन्ति। तदत्र चिन्त्यते।

---

१८. म.सा. पृ. १०६ उ.प्र.भा. पृ. ९३ (मां.भा.)७

द्वैतमतं जीवतत्त्वं ईश्वरात् पृथगङ्गीकृत्य जीवेषु त्रैविध्यं तारतम्यं चाङ्गीकरोति। [१]यथोक्तम् **''भिन्ना जीवगणा हरेरनुचरा नीचोच्चभावं गताः।''** इति

## १. जीवलक्षणम्

तत्र प्रथमतः जीवलक्षणं पश्यामः।

**अल्पशक्तिरसार्वज्ञं पारतन्त्र्यमपूर्णता।**
**उपजीवकत्वं जीवत्वमीशत्वं तद्विपर्ययः॥**[२]

**''स्वाभाविकं तयोरेतत् नान्यथा स्यात् कथञ्चन।**
**वदन्ति शाश्वतावैतौ अत एव महाजनाः॥''**[२]

-विष्णु पुराणे (गीतातात्पर्योदाहृतं) २-२१-२०

**''अहमित्येव यो वेद्यः स जीव इति कीर्तितः।**
**स दुःखी स सुखी चैव स पात्रं बन्धमोक्षयोः॥''**[३] (वि.त.नि.)

काठकभाष्येऽपि

**''यः कर्मफलभोक्ता सुप्त्यादिमान् स जीवः।''**[४] अ-२-प्रथमवल्ली

एवमादिलक्षणानि पिण्डीकृत्य मध्वसिद्धान्तसारे जीवलक्षणमुक्तम् । तद्यथा **''अज्ञानादिदोषयुक्ताः संसारिणो जीवाः।''** (प.स.) (सं)[५]

जीलक्षणमभिहितं भागवतेऽपि[६]

**''एकं पञ्चविधं लिङ्गं त्रिवृत्षोडशविस्तरम्।**
**एष चेतनया युक्तः जीव इत्यभिधीयते॥''** (४)-२९-७६

---

१. श्रीव्यासतीर्थोक्तप्रमेयनवमालिकास्तोत्रमिति प्रथितम्। २. गी.भा. पृ. २८१
३. सं.ग्रं. पृ. ११६ ४. उ.प्र.भा. पृ. ४२
५. म.सि.सा. पृ. ८ ६. भा. पृ. २४५

एकं लिङ्गं लिङ्गशरीरं, त्रिवृत् प्राणेन्द्रियान्तःकरणभेदेन त्रिवृत् (त्रिधा) भिन्नया, षोडशविस्तरम् - पञ्चज्ञान- पञ्चकर्म - पञ्चप्राणैः चेतनया च मनसा सह युक्तो एष जीव इति कथ्यते। अनेन जीवस्य प्राकृतशरीरवत्वमुक्तं भवति।

उपर्युक्तप्रमाणवचनैः जीवलक्षणमेवमुक्तं भवति। जीवत्वं नाम - उत्सर्गतया स्वभावतः (१) अल्पशक्तित्वं (२) असार्वज्ञ्यं, (३) पारतन्त्र्यं, (४) अपूर्णता, (५) उपजीवकत्वं, (६) अहं प्रत्ययत्वे सति सुखदुःखभाक्त्वं, (७) बन्धमोक्षपात्रत्वं, (८) पुण्यपापादिकर्मफल भोक्तृत्वं (९) सुप्त्यादिमत्वं, (१०) प्राकृत - लिङ्गशरीरवत्वं इत्यादयः।

## २. कति विधाः जीवाः

जीवास्तु बहुविधत्वेन प्रत्यक्षागमाभ्यां ज्ञायते। तत्रापि आगमज्ञानं तु तात्त्विकं। प्रत्यक्षमूलं तु तात्कालिकभेदभिन्नम्। प्रत्यक्षमात्रेण जीवस्वरूपनिर्धारणाशक्यत्वात्। तथा हि।

[७]''**त्रिविधा जीवसङ्घास्तु देवमानुषदानवाः।**
**तत्र देवा मुक्तियोग्या मानुषेषूत्तमास्तथा।**
**मध्यमा मानुषा ये तु सृतियोग्याः सदैव हि।**
**अधमा निरयायैव दानवास्तु तमोलयाः।।** इत्यादि म.ता.नि.१-८६,८७

तथा च जीवत्रैविध्यमङ्गीकृतं मध्वमते।

## ३. जीवानन्त्यम्

जीवा सङ्ख्येयाः असङ्ख्येया अनन्ता वा इति जिज्ञासायां श्रीमदाचार्याः अभिप्रयन्ति। यथा।

[८]''**आनन्त्यमेव गणशोऽस्ति यतो हि तेषां इत्थं ततः सकलकालगता प्रवृत्तिः।।**'' मा.ता.नि. १-१९

---

७. म.ता.नि. पृ. १४, १६ ८. म.ता.नि. पृ. ४

## ४. जीवानन्त्यविवरणम्

अस्य श्रीवादिराजगुरवः भावप्रकाशिकायां एवं व्याख्यास्यंति।[९]

**''आनन्त्यमेव गणश''** इत्यत्र ब्रह्मपदयोग्यजीवगणाः रुद्रपदयोग्य-जीवगणाः इन्द्रपदयोग्यजीवगणा इत्यादिना गणैरानन्त्यमस्ति इति भावः।

अपि च ब्रह्मरुद्रेन्द्रजीवगणानन्त्यविषये बृहदारण्यकोपनिषदि,[१०] पञ्चमाध्याये आर्तभागब्राह्मणे **''अनन्तं वै नाम''** इति श्रुतिरपि प्रमाणमस्ति। तद्यथा **''याज्ञवल्क्येति होवाच। नामेत्यनन्तं वै नामानन्ता विश्वे देवा अनन्तमेव स तेन लोकं जयति।''**

तत्र श्रीराघवेन्द्रतीर्थानां खण्डार्थे[११] :-

**''नाम्नोऽनन्तत्वं कुतस्तद्वाच्यानां देवानां अनन्तत्वादित्याह अनन्ता वा इति। ब्रह्मरुद्रादिदेवानामनन्तत्वात् तन्नामान्यपि अनन्तानीत्यर्थः।''**

एतेन आनन्त्यमेव गणशोऽस्ति यतो हि तेषामिति निर्णयोक्तं प्रमाणेन पुष्टोऽभूदिति ज्ञातव्यम्॥ न हि चेत् **''नामानन्ता विश्वे देवा''** इत्यादि बहुवचनवैयर्थ्यापत्तेः॥

श्रीरघूत्तमतीर्थानां भावबोधे च[१२]

**''शेषो मुक्तः विरिञ्चो मुक्तः इति मुक्तानामपि तत्तन्नाम्ना व्यवहारादित्यर्थः। वाच्यानां देवानां अन्तवत्वे खलु तद्वाचकशब्दस्यानन्त-वत्वम्। तदेव नास्तीत्याह अनन्ता''** इति।

[१३]जीवानन्त्यविषये प्रमाणमुदाहृतं गीतातात्पर्ये **''मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये''** इत्यत्र-

---

९. म.ता.नि. पृ. ८० (२००५)
१०. बृ.खं. पृ. १२३
११. बृ.खं. पृ. १२३
१२. बृ.भा.पृ. ३८१-३८३
१३. गी.भा. पृ. ३३८ परिशिष्टं-७, (पृ. २४४) पश्यताम्

[१४]‘‘**अनन्तानां तु जीवानां यतन्ते केचिदेव तु।**
**मुक्त्यै तेषु च मुच्यन्ते केचिन्मुक्तेषु च स्फुटम्।**’’-इति पाद्मे गी.ता.नि

## ५. परमाणुप्रदेशेऽपि अनन्तजीवाः

[१५]**परमाणुप्रदेशेऽपि ह्यनन्ताः प्राणिराशयः।** इति ॥ वि.त.नि.

[१६]जनार्दनभट्टीयव्याख्यानपदार्थदीपिकायामपि ‘‘**तेषां ब्रह्मादिपद-योग्यानां गणाश्चानन्त्यमस्त्येव। यतस्तत इत्थं प्रवाहाविच्छेदेन सकल-कालगताप्रवृत्तिर्युक्ता**’’। इति व्याख्यातम् ।

## ६. त्रिविधजीवानन्त्यम्

तदेतत्सर्वमुक्तं प्रमाणवचनोदाहरणेन भगवत्पादैः। तद्यथा।[१७]

‘‘**ब्रह्मत्वयोग्या ऋजवो नाम देवाः पृथग्गणाः।**
**तैरेवाप्यं पदं तत्तु नैवान्यैः साधनैरपि।**
**एवं सर्वपदानां तु योग्याः सन्ति पृथग्गणाः**’’॥
**तस्मादनाद्यनन्तं हि तारतम्यं चिदात्मनाम्॥**

- म.भा.ता.निर्णये (१)-९३,९४,९५-भविष्यत्पर्वपुराणे

न केवलं देवेषु गणाः सन्ति, असुरेष्वपि तथा सन्ति। यथोक्तम्।[१८]

‘‘**असुराः कलिपर्यन्ता एवं दुःखोत्तरोत्तराः।**
**कलिर्दुःखाधिकस्तेषु तेऽप्येवं ब्रह्मवद्गणाः।**
**तथाऽन्येप्यसुराः सर्वे गणा योग्यतया सदा।**’’म.ता.नि.१-१३२,१३३

तद्विवृतं मध्वसिद्धान्तसारे ....[१९]

---

१४. गी.भा. पृ. ३३८
१५. सं.ग्रं. पृ. १२६, १२७
१६. म.ता.नि.ज. पृ. ८१ (ज.भ.प.दी)
१७. म.ता.नि. पृ. १८५-१८७
१८. म.ता. पृ. २४०, २४१
१९. म.सा. पृ. ९३

**''एवं कलिकालनेमिविप्रचित्यादिपदयोग्या असुरा अपि प्रत्येकमनन्ता इत्यर्थः।''** इति।

## ७. सर्वचेतनोत्तमः विष्णुः

परस्परं चेतनेषु तारतम्यमुक्त्वा तस्य सीमा भगवान् विष्णुरेवेति द्वैतमतपद्धतिः। तद्यथा

**''ततोऽनन्तगुणो विष्णुर्न कश्चित्तत्समः सदा''**।

इति श्रुतिः तत्र प्रमाणं[२०] । म.ता. निर्णये। १-७५

एवं चेतनतारतम्येऽपि आनन्त्यमस्तीति सिद्धान्तः। तदुक्तं आचार्यैः।[२१]

**''तस्मादनाद्यनन्तं हि तारतम्यं चिदात्मनाम्।''** १-९६ मा.ता.नि.

भवतु तारतम्यं। यदि केनापि साधनेन तत्तारतम्यं विपरिणमितुं शक्यं न वेति चेत्। तदशक्यमित्याह आचार्यः।

**''तच्च नैवान्यथा कर्तुं शक्यं केनापि कुत्रचित्।''**१-९६ म.ता.नि.

सदसज्जीवाः क्रमात् भक्तिद्वेषसाधनाभ्यां स्वयोग्यं फलं प्राप्नुवन्ति। तत्रापि सज्जीवेषु मनुष्योत्तममारभ्य ब्रह्मान्तं आनन्दतारतम्यं भवति। तदुक्तं म.ता.निर्णये।

[२२]**''ब्रह्मणः परमा भक्तिः सर्वेभ्यः परमस्ततः।''** १-१२०

[२३]**''ब्रह्मैव सर्वजीवेभ्यः सदा सर्वगुणाधिकः।''** १-१३७

---

२०. म.ता.नि. पृ. १२

२१. म.ता.नि. पृ. १८७

२२. म.ता.नि. पृ. २२०

२३. म.ता.नि. पृ. २४१

## ८. द्वेषानन्त्यम्

[२४]तद्वत् असज्जीवेषु मनुष्याधममारभ्य कालिपर्यन्तं द्वेषमूलदुःखतारतम्यं वर्तते। यथोक्तं म.ता.निर्णये ह्यह्य

**''पूर्णदुःखात्मको द्वेषः सोऽनन्तो ह्यवतिष्ठते।**
**पतितानां तमस्यन्धे निश्शेषसुखवर्जिते॥''**
[२५]**कालिर्दुःखाधिकस्तेषु तेऽप्येवं ब्रह्मवद्गणाः॥** १-११२

[२६]तद्व्याख्याने श्रीजनार्दनभट्टारकाः

**''पूर्णं यद्दुःखं तदात्मकः। अनन्तः नित्यः। ईषदपि सुखसम्बन्धवर्जितेऽन्धे तमसि॥''** इति

## ९. दुःखानन्त्यम्

[२७]दुःखानन्त्ये कारणमाह भागवते।

**''लोकः स्वयं श्रेयसि नष्टदृष्टिः अर्थान् समीहेत निकामकामः।**
**अन्योन्यवैरः सुखलेशहेतोः अनन्तदुःखं च न वेद मूढः ॥''**५-५-१६

## १०. सुखानन्त्यम्

सच्चेतनानामनन्तसुखप्राप्तिहेतुभूततपआदिकरणेन अनन्तसुखमाप्नोति अधिकारीपुरुष इत्युक्तं भागवते -

[२८]**ब्राह्मणस्य च देहोऽयं क्षुद्रकामाय नेष्यते।**
**कृच्छ्राय तपसे चैव प्रेत्यानन्तसुखाय च॥** (११)-१७-४२

---

२४. म.ता.नि. पृ. २१०
२५. म.ता.नि. पृ. २४०
२६. म.ता.नि. पृ. २१०
२७. भा. पृ. २६२
२८. भा. पृ. ८१४

अत्र अनन्तसुखप्राप्तिर्नाम मोक्षलाभः भवतीत्यर्थः कृच्छ्रादिव्रतकर्तुः पुरुषस्य।

केवलमानन्त्यशब्दः मोक्षवाचकः। भगवदर्पणबुद्ध्या सत्पात्रेभ्यः सर्वस्वदानेन भगवान् मोक्षं प्रददाति । तच्च देयं प्रतिग्रहीतुः गष्टतमं, स्वस्य प्राणेभ्योऽपि प्रियमपि स्यात् । इति श्लोकार्थः ह्न तदुक्तम्

[२९]''**यद्यदिष्टतमं लोके यच्चातिप्रियमात्मनः।**
**तत्तन्निवेदयेन्मह्यं तदानन्त्याय कल्पते॥**'' (११)-११-१९

''**दीयते विष्णवे वापि तदनन्तफलप्रदम्**''। कूर्मपुराणे २-२६-३५

## ११. मुख्यप्राणस्य अनन्तरूपाणि

जीवेषु मुख्यप्राणस्य भगवत इव अनन्तरूपाणि सन्ति। अस्य मुख्यवायोः त्रिकोटिरूपाणि सन्ति। [३०]अपि च ''**अनन्तमूर्तिर्ब्रह्मसौ अनन्तजगदास्थितः**'' इत्युक्तेः **वायोरप्यनन्तरूपाणि सिद्धानि, न केवलं हनुमभीममध्वादिकतिपयरूपाणि॥**

''**जीवेभ्य सर्वेभ्यः ब्रह्मवायू महानन्तगुणाकरौ।**
**सः मुख्यवायुः अनन्तानन्तरूपेण जगद्यमयति।**''

सर्वेषां जीवानां जाग्रत्स्वप्नसुषुप्त्यादि सर्वावस्थानियामकोऽपि सः।

एवं जीवानन्त्यं संख्ययैव। जीवेषु गुणनिमित्तकतारतम्यमस्ति। तत्र ब्रह्मवायू गूणोत्तमौ तस्मात् जीवोत्तमौ अनन्तजीवेषु। कलिस्तु जीवाधमाधमः अनन्तदोषदुष्टः अधमजीवेषु इति विवेकः।

---

२९. भा. पृ. ८०१          ३०. स.र. पृ. १३९

## ३.१.८ चेतनधर्माणामानन्त्यम्

केचन चेतनधर्माणां ज्ञानेच्छाक्रियादीनामानन्त्यं जीवब्रह्मणोर्विषये शास्त्रे विशेषतः उक्तं। तेषां विशेषाणां आनन्त्यवैविध्यमत्र चिन्त्यते।

### १. चेतनलक्षणम्

द्वैतमते श्रीहरेः स्वातन्त्र्यपूर्वकपरमचेतनत्वं, लक्ष्म्याः तन्मात्राधीनत्व-चेतनत्वं अव्यक्ततत्वाभिमानित्वं च ब्रह्मादिसत्कल्याद्यसत्चेतनानां स्वोत्तमाधीनत्वं तावत् शास्त्रतः ज्ञायते खलु। एतानि सर्वाण्यपि चेतनानि चेतनसामान्यलक्षणभञ्जि ज्ञानेच्छाक्रियावन्ति च। लक्ष्मीनारायणौ विना सर्वाण्यपि चेतनानि स्वस्वभावानुगुणसत्वादिगुणोपेतत्वात् सत्वादिभेदेन त्रिविधज्ञानेच्छाक्रियावन्ति इत्यत्र न सन्देहगन्धोऽपि दृष्टचरः।

तत्र सर्वेषां सामान्यं तु सदसच्चेतनानाम् सार्वकालिककर्मवत्वं। तदुक्तं गीतायां -

**''न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत्''** ३-५

श्वेताश्वतरोपन्निषदि ब्रह्मणो स्वाभाविकज्ञानबलक्रियावत्वमुक्तम्। तद्यथा

[१]**''स्वाभाविकी ज्ञानबलक्रिया च''** अ. ६-८

### २. रमानारायणयोः अनन्तधर्माः - अनन्तावताराणि च

तथा च अनाद्यनन्तकालावच्छिन्नत्वेन चेतनानां, विशेषतो रमानारायणयोः ज्ञानक्रियेच्छादयो धर्माः आनन्ता एव।

अयमत्राभिप्रेतार्थः। ज्ञानेच्छाक्रियाणां आनन्त्यं उपलक्षणतया ईश्वरकोटि-प्रविष्टत्वात् ज्ञानानन्दादिसर्वधर्माणामपि आनन्त्यं ज्ञायते शास्त्रतः। तथापि

---

१. उ.सं. पृ. १४० (१९८०)

रमानारायणयोः एतेषां धर्माणां मध्ये तारतम्यमपि अनन्तपरिमाण एव। उदाहरणानि तु नारायणस्य अनन्तावताराः अनन्तकर्माणि लोकसङ्ग्राहकाणि, तथा रमाया अपि पतिवत् अनन्तावताराः रूपाणि कर्माणि चोक्तानि शास्त्रेषु।

## ३. ब्रह्मवाय्वोरपि अनन्तरूपाणि

ब्रह्मणो नावतारोऽस्ति सन्निधानं तु केवलं सर्वेषु जीवेषु। तस्यापि सर्वजीवगतानन्तरूपाणि। मूलरूपेण कृतानन्तकर्माणि, सकलजीवैः कृतानि कारितानि चानन्तकर्माणि संति। एवमेव वायोरपि ज्ञातव्यं उभयोरपि समानकक्षावत्वात्। सर्वेऽपि ऋजवः शतानन्दाः सर्वजीवेभ्योऽपि उत्तमत्वात्। केवलं ते पुण्यकर्मवन्तः।

## ४. इतरचेतनानां कर्मानन्त्यम्

गरुडशेषादिसर्वजीवा (उत्तम) अपि अनन्तकर्मवन्तः संसारे सुखदुःखवन्तः मोक्षे सुखमात्रवन्तश्च। विहिताविहितकर्मानन्त्यत्वात्संसारे सुखदुःखवन्तश्च। परस्परजीवेषु तारतम्यसद्भावात् तैः कृतकर्मस्वपि सदसत्कर्मविशेषानन्त्य-मस्त्येव।

मनुष्याधममारभ्य कलिपर्यन्तं मुक्त्ययोग्यत्वात् तैःकृतकर्मणामानन्त्येऽपि अविहितकर्मबहुलत्वात् दुःखानन्त्यमेव तेषां साधने दृश्यते फले च। संसारे क्वचित् क्वचित् सुखस्पर्शस्तु सज्जनसंसर्गादिकारणात् वरादिभिर्वा दृश्यते न तु तेषां स्वरूपे।

## ५. ईश्वरस्य कर्मानन्त्यं तत्र वैलक्षण्यसद्भावश्च

ईश्वरस्यानन्तावताररूपाणि कर्माणि तु लोकसङ्ग्रहेच्छया लोकानुग्रहार्थं च भवन्तीति अवतारोद्देश्यं जानतां विदितचरमेव। तस्यानन्तावतारे कर्मणामप्यानन्त्यविषये प्रमाणानि सन्त्येव तद्यथा

**"बहूनि मे व्यतीतनि जन्मानि तव चार्जुन।"** गीता. ४-५। कृष्णः स्वयं स्वस्यानेकजन्मानि आसन् भविष्यन्तीति उक्तवान् अर्जुनाय। तेनैव तत्पत्न्या लक्ष्या अपि तथैव अवताराणि सन्ति इति उपलक्ष्यं ते।

अनेनैव प्रमाणेन अर्जुनोपलक्षितसर्वजीवानामपि अनन्तजन्मानि उक्तानि भवन्ति।

महाभारततात्पर्यनिर्णये चरमेऽध्याये[२] -

**"इत्याद्यनन्तानि हरेरुदारकर्माणि रूपाणि च सद्गुणाश्च ।"**

३२-१६६

इत्युक्त्या हरेरनन्तावताराणि कर्माणि च उक्तानि भवन्ति।

भागवते च[३]

**"जन्मकर्माभिधानानि सन्ति मेंऽग सहस्रशः।**
**न शक्यन्तेऽनुसङ्ख्यातुमनन्तत्वान्मयापि हि ।"** १०-५१-३६

## ६. जीवकर्मानन्त्यम्

जीवानां कर्मानन्त्यविषये न्यायविवरणे[४]

**"कर्माण्यनन्तानि यथेष्टमीशः सम्पाद्य तेषां फलमिच्छयैव।**
**क्वचिद्ददाति क्व च नो ददाति न ह्यानन्यात् कर्मणां भोगनाशः"**॥

३-२-२०

## ७. ईश्वरस्य वैशिष्ट्यम्

ईश्वरस्यानन्तावतारेष अनन्तकर्मसद्भावेऽपि न तस्य कर्मलेपः स्वतन्त्रत्वात्

---

२. म.ता.नि. पृ. ६६३ ३. भा. पृ. ६५४

४. ब्र.सू.भा. पृ. ५६८

**''न मां कर्माणि लिम्पति न मे कर्मफले स्पृहा''** इति गीतावचनात्। किं तु यानि यानि कर्माणि (सृष्ट्यादि) करोतीशः तत्सर्वं **''आप्तकामस्य का स्पृहा''** इति श्रुत्या[५] आनन्दोद्रेकादेव न तु कश्चित् फलापेक्षया इति शास्त्रार्थः ज्ञेयः।[६] तदुक्तं **''न प्रयोजनवत्त्वाधिकरणे'' (ब्रह्मसूत्रभाष्ये (२)-१-९-३३, ३४)**

## ८. जीवकर्मानन्त्ये प्रमाणानि

जीवानां तु कर्माणि अनन्तानि सुखदुःखप्रदानि च यथा योग्यतयेति शास्त्रसिद्धान्तः। तदुक्तं गीताभाष्ये - प्रमेयदीपिकायां ॥[७]

**''....... न चाकरणे कर्माभावान्मुक्तिर्भवति। प्रतिजन्मकृतानामनन्तानां कर्मणां भावात्। न च सर्वाणि कर्माणि भुक्तानि। ......''** (गीताभाष्यं - ३-४)

तत्रैव प्रमेयदीपिकायां श्रीजयतीर्थैः-

.....जन्मनि जन्मनि कृतानामित्यर्थः। पुरुषत्वेन अनादौ संसारेऽधिकृतानन्तजन्मसंभवात्तत्र कृतानां अनन्तकर्मणां भावात् किमद्याकरणमात्रेण भवतीत्यर्थः। **''संसारश्चादिवर्जितः''** इति प्रमाणावाक्यस्य टीकायां **''संसारश्चेति, कर्मणामनन्तत्वोपपादनम्। ....... ननु सन्तु प्राग्भवीयान्यनन्तकर्माणि। ........ न ह्यनन्तानि पापानि प्राक्तनानि सन्तीत्येवताऽद्य क्रियन्त इत्यत आह॥''** इति ।

एतैः जीवानां अनन्तकर्माणि भवन्ति। तानि पापानि अपि भवेयुः (पुण्यानि वा इत्युपलक्षणं) जीवस्वभावापेक्षया इति भाष्यकाराभिसन्धिं टीकाकाराः उद्घोषितवन्त इति ज्ञायते।

एवं चेतनविविधधर्माणां विषयं यदुक्तं तत्सर्वं साधु।

---

५. उ.प्र.भा. पृ. ९८

६. ब्र.सू.भा. पृ. ९५

७. गी.भा.प्र.पृ.१४२,१४४(१९८१)

## ३.१.९ विशेषानन्त्यम्*

न्यायवैशेषिकमतोक्तविशेषः द्वैतमतोक्तविशेषः परस्परं भिन्न एव। द्वैतमतरीत्या विशेषनिरूपणं तस्य चानन्त्यनिरूपणमत्र चिन्त्यते।

### १. विशेषशब्दार्थः

विशेषशब्दः विविधशास्त्रेषु बह्वर्थसम्पन्नः। साहित्ये उक्तार्था एवं सन्ति।[१]

(१) भेदः, व्यत्यासः तारतम्यम् (२) अतिशयः, श्रोष्ठत्वम्

(३) परिवर्तनम् ; (४) भेदः - प्रभेदः ;

(५) विविधविषयाः ; अनेकगुणाः ;

(६) अलङ्कारप्रभेदः विशेषालङ्कार इति

(७) श्रेष्ठः, उत्कृष्टः (८) अतिशयितं, अधिकम्

### २. न्यायमतरीत्या विशेषानन्त्यम्

न्यायशास्त्रोक्तसप्तपदार्थमध्येऽन्यतमः विशेषो नाम। सः नित्यद्रव्यवृत्तिमान्। तादृशविशेषास्तु अनन्ता एव इति निरूपितः।

द्वैतमते विशेष इति शब्दः दशपदार्थमध्ये अन्यतमत्वेन अङ्गीकृतः। परं तु तल्लक्षणं तु न्यायमतात् भिन्नं सर्वपदार्थनिष्ठत्वमिति अभिहितम्। तत्सर्वं संक्षिप्य चिन्त्यतेऽत्र।

---

१. चक्रवर्ति श्रीनिवासाचार्यैः संपादितः संस्कृत कन्नडकोषः श.कौ.(५) पृ. २४६५

* डा.के. कृष्णमूर्तिमहाभागानां मागदर्शने डा.सि. हेच् श्रीनिवासमूर्तिमहोदयैः ''द्वैतवेदान्ते विशेषः'' इति प्रबन्धः ग्रथितः यस्य पि.हेच्.डि उपाधिः प्राप्तः। तत्र २१-२४ पृष्ठेषु विशेषानन्त्य विषयः समर्थितः। धारवाडस्थ कर्नाटकविश्वविद्यालयेन अयः प्रबन्धः पि.हेच्.डि. उपाध्यर्थं अङ्गीकृतः।

साहित्यार्थाः सर्वदर्शनाचार्यैः अभ्युपगम्यन्त एव। स्वस्वशास्त्रप्रक्रियायां तु अयं भेदः तात्विकः अन्यशास्त्रात् व्यावर्त्य वर्तते।

## ३. विशेषलक्षणम्

द्वैतमतरीत्या विशेषस्य विषये एवं निरूपितम्। तल्लक्षणमुक्तमनुव्याख्याने जन्माधिकरणे[२] -

**''भेदहीने त्वपर्यायशब्दान्तरनियामकः।**
**विशेषो नाम कथितः सोऽस्ति वस्तुष्वशेषतः॥''** (१-१-२)

तद्विवृतं सुधायाम् :ह्

**''अनेनैव विशेषस्य लक्षणमुक्तं भवति। भेदहीनेऽपि अनुपचरितभेदे व्यवहारनिमित्तं विशेष इति।''** इति। लक्षणमिदं अद्वैतवादिभिरङ्गीकार्यमिति प्रतिपादितं सुधायाम्। तत्तात्पर्यं तु जीवब्रह्मणोर्मध्ये ऐक्यं खलु **''एकधैवानु द्रष्टव्यः''** इति श्रुत्या परो मन्यते। तत्र

(१) चैतन्ये (जीवब्रह्मणोर्मध्ये यत्सामान्यं) स्वप्रकाशत्वलाभेऽपि ऐक्या-सिद्धिः।

(२) चैतन्यैक्ययोरपर्यायशब्दवेद्यत्वं (भेदः)।

(३) ऐक्यज्ञानं अविद्यानिवर्तकमपि चैतन्यज्ञानस्य तथाभावरूपार्थाक्रिया-विशेषः।

(४) चैतन्यमेकमपि सत्यत्वादीत्यनेकानि इति संख्यावैलक्षण्यमित्यादि भेदकार्याणि च ज्ञायन्ते।

एवं चैतन्यैक्ययोः अभेदबोधकश्रुतिभेदकार्ययोः अन्यथानुपपत्या

---

२. ब्र.सू.भा. पृ. ३०४, ३०५

भेदरहितेऽपि चैतन्ये भेदप्रतिनिधिस्तत्कार्यकारी कश्चिदतिशयः अस्तीति कल्पनीय एव। गत्यन्तराभावात्। तथा च अर्थापत्या भेदनिर्वाहार्थं अद्वैतसिध्यर्थं च विशेषः अङ्गीकार्य एव। वस्तुतस्तु तैः तन्नाङ्गीक्रियते इति।

एवमेव प्रपञ्चसत्यत्ववादिभिः नैयायिकादिभिरपि सर्वेष्वपि द्रव्येषु (नित्यानित्य) विशेषोऽङ्गीकार्य एव।

कथं

पटे तावत् शुक्लत्वं दृष्ट्वा शुक्लोऽयं पटः, क्षीरे शौक्ल्यं दृष्ट्वा तत्रापि श्वेतं क्षीरं, कठिणमिदं द्रव्यं इति द्रव्ये काठिण्यगुणादिकं जना वदन्ति किल। एवं गुणगुणिनोः अभेदप्रतीतिः सर्वानुभवसिद्धः। तथैवानयोः शुक्लपटयोः नैकभेदकार्याणि प्रतीतयश्च अनुभूयन्ते। न हि ते भ्रान्तिमूलाः नापि बाधिताः। एवं **प्रत्यक्षसिद्धसिद्धाभेदप्रतीति-सिद्धभेदकार्याणां** उपपत्यर्थं विशेषः अङ्गीकार्यः। अयं विशेषः न केवलं ब्रह्मणि किं तु अशेषद्रव्येषु अङ्गीकार्यः गुणगुणिनोरभेदात् भेदकार्यदर्शनात् उत्तरकाले बाधाभावाच्च।

## ४. द्वैतमते विशेषानन्त्यम्

यदि सर्ववस्तुषु विशेषोऽस्ति चेत् स च वस्तुनो न भिद्यते, प्राप्तं तर्हि सकलवस्त्वैक्यं इत्यत उक्तमाचार्यैः अनुव्याख्याने

[३]‘‘**विशेषास्तेऽप्यनन्ताश्च परस्परविशेषिणः।**
**स्वनिर्वाहकतायुक्ताः सन्ति वस्तुष्वशेषतः॥**’’ इति ।

तद्व्याख्यातं सुधायाम्

‘‘ते प्रकृतस्वरूपा विशेषा अशेषतो वस्तुषु अनन्तेषु द्रव्येषु अनन्ता एव

---

३. ष.सु.(२) पृ. ११११८-११२३

सन्ति। न पुनरेक एव सर्वत्रातो नोक्तदोषः। ......... अनन्ता इत्युपलक्षणम्। **यत्र यावन्तो व्यवहारास्तत्र तावन्तो विशेषा इति ज्ञातव्यम्।''**

## ५. ब्रह्मणो गुणानन्त्यम् विशेषानन्त्यं च

ब्रह्मणि आनन्दाद्यनन्तगुणव्यवहारात् ब्रह्मतद्गुणयोरभेदस्य विशेषसामर्थ्यात् ब्रह्मणो अनन्तगुणत्वं सिद्धमिति आचार्याः वदन्ति।

[४]**''अतोऽनन्तगुणं ब्रह्म निर्भेदमिति भण्यते।''**इति अ.व्या.(१-१-२)

**''यद्यपि ब्रह्मणः जन्माद्यस्येत्यनेकलक्षणसद्भावेऽपि नानेकलक्ष्य-प्रसङ्गः, लक्षणानां वा अनेकत्वानुपपत्तिः, शब्दपर्यायत्वं, गुणगुणित्वा-द्यनुपपत्तिरिति, तस्योत्तरं निर्भेदमप्यतो विशेषाद्गुणानामनन्तत्वं, ब्रह्मणश्चैकत्वं अनन्ता गुणा अस्येति गुणगुण्यादिभावो, ब्रह्म च गुणाश्चेत्यपुनरुक्तभणनं च युज्यते इति।''**

**''अत्र जगज्जन्मादिकारणत्वमिति वक्तव्ये अनन्तगुणमिति वचनमिदं सूत्रमनन्तगुण(वत्)त्वमेव ब्रह्मणो लक्षणमभिप्रेत्य तत्साधनाय जगज्जन्मादिकारणत्वलक्षणं प्रतिपादयितुं प्रवृत्तमिति सूचयितुम्''** इति सुधायां ब्रह्मणोऽनन्तगुणत्वं प्रतिपादितम्।

न केवलं ब्रह्मगुणगुणिभावो विशेषात् सिद्धः किं तु **''एवं धर्मान् पृथक् पश्यन्''** इति श्रुत्या ब्रह्मणो गुणवत्वं, गुणेष्वभेदं, तदनङ्गीकुर्वाणस्य[५] अधःपतनरूपविपरीत-फलदर्शनोक्त्या सिद्धमिति सर्वमनवद्यम्।

तथा च ब्रह्मणि अनन्तविशेषाः इतरत्र च व्यवहारानुसारतः यथायोग्यं विशेषसंख्या अपि ज्ञातव्यम्॥

**आनन्त्यं तु श्रुतीनां च दर्शयन्ति विपश्चितः।**

४. ष.सु. (२) ११२५ ५. ष.सु. (२) ११२६

## ३.१.१० आनन्त्ये तारतम्यम्

एवमानन्त्यवैविध्याध्ययनेन अत्रापि कंचित्तारतम्यमस्ति वा न वेति विचारो जायते। तत्र प्राचीनटीकाकाराः श्रीपद्मनाभतीर्थाः, श्रीनरहरितीर्थाः अर्वाचीनटीकाकार टीकाकृत्पादाः आनन्त्यतारतम्यं उररीकुर्वन्ति गीता-सूत्रप्रस्थानादिषु ग्रन्थेषु। तत्सर्वं - अन्यत्र विद्यमानं कंचित् ऊहादिना च पिण्डीकृत्य आनन्त्यतारतम्यमत्र चिन्त्यते।

### १. पदार्थलक्षणम्

यथावस्थितज्ञेयविषयीकारित्वं प्रमाणम्। यथार्थज्ञानं प्रमा। प्रमाविषयः प्रमेयम्। प्रमेयत्वं पदार्थसामान्यलक्षणम् न तु तर्क्यन्ते प्रतिपाद्यन्ते इति पदार्था इति तार्किकोक्तलक्षणं अनुमानमात्रजं अङ्गीकृतं आचार्यैः।

### २. अनन्तपदार्थाः

सृष्टौ तावत् अनन्ताः पदार्थाः सन्ति तथापि ते दशविधतया वर्गीकृताः द्रव्यगुणकर्मसामान्यविशेषविशिष्टांशिशक्तिसादृश्याभावभेदेन (म.सि.सा.पृ. २)। [१]सर्वेऽपि पदार्थाः परस्परं वैलक्षण्यधर्मवन्तः **''परिमाणतारतम्येनैव स्थिता''**।[२]

### ३. आनन्त्ये तारतम्यम्

अत्रापि किं नाम तारतम्यम्। तरतमभावः। उच्चत्वं नीचत्वमिति वा नीचत्वं च सावधिकं। अवधिश्च अनन्तस्य नायुक्ता। अनन्तमिति निरवधिकमिति

---

१. म.सि.सा. पृ. ४/२ २. ष.सु. (४) पृ. ३४०४

एकार्थत्वात्। तस्मात् यदनन्तं तत् न तरतमभावोपेतम्। कथं तर्हि आनन्त्ये तारतम्यम् सत्यं।

## ४. केषु केषु पदार्थेषु तारतम्यम्

केचेनैव पदार्थाः आनन्त्यधर्मवन्तः।

आनन्त्यधर्मवन्तस्तु **द्रव्येषु** (१) परमात्मा (२) चिदचित्प्रकृत्यभिमानिनी लक्ष्मीः (३) प्रकृतिः, (४) अव्याकृताकाशः, (५) एकपञ्चाशद्वर्णाः, (६) कालः।

**गुणेषु** (१) संख्या, (२) परिमाणम्, (३) सुखं, (४) दुःखम्, (५) धर्माधर्मौ, (६) वेदाः (७) केचन चेतन धर्माः, (८) दानं। **कर्माणि** (७) विशेषाः तत्र तत्र शास्त्रे दृष्टचराः। एतद्विभागस्तु केवलं अध्ययनसौकर्यार्थं विषयाणां सम्यगवधारणार्थं कृतः यथा दशपदार्थविभागः मध्वसिद्धान्तसारे कृतः। (पृ. २) अन्यथाऽपि कर्तुं शक्यत्वात्।

## ५. आनन्त्यं नाम

किमिदमानन्त्यम्। अनन्तस्य भावः आनन्त्यम्। ''**अनन्तशब्दो हि परिच्छेदाभावं वदति। परिच्छेदो हि देशतः कालतः वस्तुतश्च भवन् युगपदेव प्राप्नोति।**'' (सुधा पृ. ३४३४)[३] **यद्वा नविद्यते अन्तः नाशः अवधिर्वा यस्य सः अनन्तः तस्य भावः आनन्त्यम्।**

## ६. आनन्त्यतारतम्यम्(पट्टिका)

एवमनन्तलक्षणवन्तः के इत्युक्ते उच्यते।

---

३. ष.सु. (४) पृ. ३४३४

| सख्यां | अनन्तवत् | आनन्त्यम् | | | | |
|---|---|---|---|---|---|---|
| | द्रव्यं।गुणः। | देशे | काले | गुणतः | वस्तुतः | संख्यातः |
| १) | परब्रह्म नारायणः | √ | √ | √ | √ | — |
| २) | महालक्ष्मीः | √ | √ | — | √ | — |
| ३) | मूलप्रकृतिः (जडः) | √ | √ | — | — | — |
| ४) | अव्याकृताकाशः (देशः) | √ | √ | — | — | — |
| ५) | कालः | √ | √ | — | — | — |
| ६) | वर्णाः | √ | √ | — | — | — |
| ७) | वेदाः | √ | √ | — | — | √ |
| ८) | मन्त्राः | √ | √ | — | — | √ |
| ९) | विशेषाः (ब्रह्मणः) | √ | √ | √ | — | √ |
| १०) | जीवाः | — | √ | — | — | √ |
| ११) | कर्म (ब्रह्मणः) | √ | √ | √ | — | √ |
| १२) | दानादिकर्म पुण्यं-पापं-सुखं-दुःखं चेतवधर्माः | √ | √ | √ | — | √ |
| १३) | परमाणुः | — | — | — | — | √ |
| १४) | संख्या | — | — | — | — | √ |

उपर्युक्तपद्दिकया पदार्थगुणानुसारेण तारतम्यं दृश्यते आनन्त्येऽपि। **''यथा परमाणुषु परिमाणतारतम्यं'' ''आनन्त्येऽपि तारतम्यसंभावात् इत्युक्तेः सुधा-याम्।**[४] **''अनन्ता हि पार्थिवपरमाणवोऽनन्तश्चान्त्य-विशेषाः। न च ते समसंख्याः। तथा सत्यपि परमाणुषु तदभावापातात्। तथा सर्वकल्पेषु संसरिणो अनन्ताः। तथाऽपि अपवर्गवशात् तारतम्यमभ्युपेयमेव। एवमनेकमुदाहरण-मिति''।** इति सुघोक्तेः अनेकद्रव्यगुणादिषु आनन्त्यसद्भावेऽपि तेषु साम्याभावात् वैलक्षण्यसद्भावात् तारतम्यमभ्युपेयम्। (सुधा ३४७८)

## ७. सारांशः

एतेषां मध्ये (१-१४) तारतम्यज्ञानं तु तेषां स्वरूपादिना ज्ञातव्यम्। तत्सर्वं अस्मिन्नेवाध्याये विस्तृततया प्रतिपादितं प्रमाणोदाहरणेन। आनन्त्यतारतम्यं तु एवं ज्ञेयं फलत इति मन्ये।

(१) सर्वपदार्थोत्तमः भगवानेव नारायणः सर्वदेशकालनियामकः तदतीतः गुणतोऽप्यनन्तः सर्वतन्त्रस्वतन्त्रः। स एव ज्यायान् सर्वपदार्थमध्ये।

(२) महालक्ष्मीः तदनन्तरं भगवन्मात्राधीना देशकालयोः समव्याप्ता ब्रह्मणोऽपि कोटिगुणोद्रिक्ता।

(३) मूलप्रकृतिस्तु देशकालव्याप्तिमती - अव्याकृताकाशेऽपि तद्भाववती सूक्ष्मांशेन, यस्या अभिमानिनी रमैव।

(४) देश (आकाश) कालौ जडावपि परस्परवृत्तिमन्तौ, वर्णाः वेदाः मन्त्रा आपि सकलदेशकालव्याप्तौ यथा देशकालौ। तस्मात् देशकालौ

---

४. ष.सु.(४) पृ. ३४७८

वर्णविदमन्त्राः प्रायः समव्याप्तिमन्तौ इति मन्ये। तत्रापि वर्णविदमन्त्राणां महालक्ष्म्यभिमन्यमानत्वात् द्वितीयस्थाने एव भावयितुं योग्य इति मन्ये।

(५) विशेषाः - ब्रह्मणो ये विशेषाः ते नैव ब्रह्मभिन्नाः तस्मात् ते प्रथमस्थाने अलङ्कर्तुं योग्याः

(६) कर्मानन्त्यमपि भगवतः प्रथमस्थानयोग्यम्। जीवानां कर्मानन्त्यं तु पुण्यपापदानधर्मादिनामानन्त्यं यथा सम्भवं तारतम्यानुसारेण ज्ञेयम्। तत् प्रधानतः संख्यानन्त्ये पर्यवस्यति। एतेषां संख्यानन्त्यमपि जीवयोग्यतानुसारेणैव ज्ञेयम् यतः सर्वेषु जीवेषु तारतत्म्यसद्भावात् संख्यानन्त्येऽपि पुनः तारतम्यं विद्यत एव। देवास्तु एककाले सर्वाश्रमभाजः न तथा निरंशाः। तस्मात् कर्मकारणसामर्थ्ये सर्वेषु जीवेषु तारतम्यं विद्यत एव।

(७) जीवानन्त्यं तु कालतः संख्यातश्च। सर्वकालवृत्तित्वं मुक्तामुक्त जीवानां विद्यते एव। संव्यानन्त्यमपि प्रत्येकजीवानां प्रतिगणं अधिकृत्य वर्तते। तद्यथा। ब्रह्मपदयोग्यजीवाः गरुडशेषेन्द्रकामादिदेवपदयोग्याः जीवाः गणशः सन्ति। तेषामानन्त्यं विद्यते। तथैव ब्रह्मपदयोग्या अपि जीवाः संख्यातः अनन्ता एव। एतावत् कालं अनन्तानां जीवानां मुक्तिप्राप्तावपि अवशिष्टाः सृष्टिं प्राप्य मोक्षं ये भाविकाले प्राप्नुवन्ति तेऽप्यनन्ता एव इति तत्राभिसन्धिः।

(८) कालानन्त्यात् जीवानन्त्यं ज्यायः इति प्राचीनटीकाकाराः श्रीनरहरितीर्थाः।

श्रीनरहरितीर्थीयगीताभाष्यभावप्रकाशिकायामपि[५]

---

५. भा.भा.प्र. पृ. २४१

**‘‘जीवानामेकैकराशेरेव मिलितातीतानागत**

**कालक्षणेभ्योऽप्यनन्तगुइणतत्वोक्तेर्वत्सश्रुतौ’’।**

वत्सश्रुतिस्तु आचार्यैः तत्वनिर्णये उदाहृता। तद्यथा

**‘‘अतितानगताश्चैव यावन्तः परमाणवः।**

**ततोऽप्यनन्तगुणिता जीवानां राशयः पृथक्।।** इति वत्सश्रुतिः।।

(९) कालेऽपि कालोऽस्त्येव वत्सरे अयनर्तुमासपक्षवारदिनघटिकालक्षण-सद्भावात्। अत्रापि क्षणानन्त्यं संख्यया घटिकादिनमासेभ्यः ज्याय एव।

(१०) तथा देशे देशो (आकाशे आकाशः) अस्त्येव। तत्रापि धटाकाशमठाकाशग्रामनगरादितारतम्यं अस्त्येव। सर्वेऽपि अव्याकृताकाशभागाः। अंशांशिनोः अंशस्य कनीयस्त्वमपि संख्यातः तस्य ज्यायस्त्वं कालवत् न तु परिमाणापेक्षया ज्ञेयम्। तस्मात् कालस्य परार्धकालस्यैव ज्यायस्त्वं इतरेभ्यः अव्याकृताकाशस्य गरीयस्त्वं भूताकाशात् इति व्यवस्थायाः अनुभवसिद्धत्वात् तारतम्यं आनन्त्येऽपि ज्ञातव्यम्। इत्यादयः ।

## ३.२ परब्रह्मणो नारायणस्य आनन्त्यत्रैविध्यम्

सन्ति खलु त्रयः पदार्थाः जडजीवेश्वरभेदेन सम्मता आस्तिकानां। इतः पूर्वं वर्णविददेशकालानां यथासंभवं सर्वदेशकालवृत्तित्वरूपानन्त्यं जीवानां संख्यानन्त्यं, कालानन्त्यं च निरूपितम्। अधुना ईश्वरविषयकानन्त्यत्रैविध्यं चिन्त्यते।

### १. पीठिका

श्रीमन्मध्वमते जीवेश्वजगदिति त्रयः पदार्थाः विशेषतो जिज्ञासिताः। सर्वेषामेषां प्रत्येकमस्तित्वमङ्गीकृतम्। जीवजगतोस्तु अस्तित्वं सर्वथा

ईश्वराधीनमिति तस्य सर्वतन्त्रस्वातन्त्र्यं सर्वोत्तमत्वं समर्थ्यते।

## २. ब्रह्मलक्षणम्

अस्मिन्मते ईश्वरः विंशतिद्रव्यान्यतमः। ईश्वरलक्षणं तु बहुधा वर्णितं तत्र तत्र। तदुक्तं मध्वसिद्धान्तसारे

**अनन्तगुणपरिपूर्णः।** (सर्वदोषदूरश्च)[1]

''**बृहन्तो ह्यस्मिन् गुणा इति ब्रह्म।**'' इति श्रुतिः॥[2] ''**बृहि वृद्धौ**'' इति धातोः निष्पन्नमिदं ब्रह्म पदम्। ''**वृद्धौ**'' इति उक्ते केन वृद्धिरिति प्रश्ने कृते आकाङ्क्षया गुणवृद्धिरेव समाधानं न तु दोषैः यतो जगज्जन्मादिकर्तरि दोषशङ्कापि ब्रह्म अधः करोति। तस्मात् यथाकांक्षं गुणवृद्धिर्नाम गुणपूर्णतैव श्रुतिविवक्षितार्थो भवति।

गुणपूर्णवस्तु कुत्रापि अप्रसिद्धत्वात् तज्ज्ञानाय अपरं दृष्टलक्षणं संभावितमुक्तं भगवता सूत्रकारेण

''**ॐ जन्माद्यस्य यत ॐ**'' इति। (१)-१-२-२

तेन सृष्ट्याद्यष्टकर्तृत्वं ब्रह्मणो लक्षणं उक्तं भावति। सूत्रे आदिशब्देन न केवलं जन्मस्थितिभङ्गा अभिप्रेताः किन्तु श्रुतिस्मृत्युक्तनियमनादिपञ्चेतरभावा अपि सूत्राभिप्रेतमिति आचार्याः भाष्यादिषु उक्तवन्तः। तत् यथोक्तम् (ब्र.सू. भाष्ये)[3]

''**उत्पत्तिस्थितिसंहारा नियतिर्ज्ञानमावृतिः।**
**बन्धमोक्षौ च पुरुषाद्यस्मात्स हरिरेकराट्॥**'' इति स्कान्दे १-१-२

नेदं समष्टिलक्षणं ब्रह्मणो। किं तु प्रत्येकमपि भगवद्व्यापारं (सृष्टिः स्थितिः .....) ब्रह्मणो लक्षणमिति प्रतिपादितं अनुव्याख्याने सुधायां

---

१. म.सि.सा. पृ. ६५ २. पा.सू. पृ.

३. ब्र.सू.भा. पृ. १०, ११

जन्माधिकरणे। यतो प्रत्येकमपि विशेषणं ब्रह्मण्येव सर्वथा संभवात् असंभावितमन्यत्र ब्रह्मरुद्रादिषु। कुतस्ते सर्वे ब्रह्मलक्षणवर्जिताः दोषवन्तश्च। इति चेत् । प्रलये तेषामभावश्चेत्यादिदोषदर्शनात् ।

तथा च अनन्तगुणपूर्णत्वं दोषदूरत्वं ब्रह्मणो यल्लक्षणं तद्धरेरेव नान्येषाम्।

अनन्तगुणपरिपूर्णत्वरूपलक्षणे प्रमाणानि-

[४]''**मय्यनन्तगुणेऽनन्ते गुणतोऽनन्तविग्रहे ।**'' भा. (६)-४-४८

तदीयतात्पर्ये :ह्न

''**प्रत्येकशो गुणानां तु निस्सीमत्वमुदीर्यते।**
**यदानन्त्यं तु गुणतस्ते चानन्ता हि संख्यया।**
**अतोऽनन्तगुणो विष्णुर्गुणतोऽनन्त एव च।।**'' इति तन्त्रभागवते

अयमत्र विवेकः। परमात्मनि सजातीयविजातीयानन्तगुणाः सन्ति। तेषां प्रत्येकमपि निस्सीमत्वमुच्यते। कारुण्यमिति उदाहरणार्थं एको गुणः। सोऽपि पूर्णप्रमाणेन हरावेव न तु अन्यत्रेति भावः। एवमेव सर्वेऽपि गुणाः हरावेव पूर्णतया सन्ति न तु अन्यत्रेति मन्तव्यम्। तदेवानन्तगुणात्वकल्पना ब्रह्मणः। सर्वेषां गुणानां पूर्णत्वरूपप्रमेयं ''**ॐ भूम्नः क्रतुवत् ज्यायस्त्वं तथा च दर्शयति ॐ**'' इति भूमाधिकरणे समर्थितम्। तन्नयानुसारेण ज्ञातव्यं।

[५]''**पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुदच्यते।**'' बृ.उ.

[६]''**अनन्तगुणमाहात्म्यो निर्दोषो भगवान् हरिः ।**
**न समो वाऽधिको वाऽपि विद्यते तस्य कश्चन।।**''गी.ता.(उपोद्घातं)

[७]''सत्यं पूर्णं, विज्ञानं पूर्णं, कृतिः पूर्णा, निष्ठा पूर्णा, श्रद्धा पूर्णा, मतिः पूर्णा, सुखं पूर्णं, भूमा पूर्णो, अहं पूर्णो, आत्मा पूर्णो, नात्र किञ्चिदूनं

---

४. भा.ता. पृ. ३०४
५. उ.प्र.भा. पृ. ७३८
६. गी.भा. पृ. २६१
७. ब्र.सू.भा. पृ. ५७४

पूर्णमेवाधस्तात् पूर्णमुपरिष्टात्, पूर्णं मध्यतः पूर्णं सर्वतः। तदेष श्लोको भवति- (न्यायविवरणोदाहृतश्रुतिः (३)-३-२४)

ब्रह्मसूत्रभाष्ये च चतुर्वेदशिखायां इत्युक्त श्रुतिः[८]

**''हरिरनादिरनन्तोऽनन्तशीर्षोऽनन्ताक्षोऽनन्तबाहुः**

**अनन्तगुणोऽनन्तरूपः''** इति।

**''विष्णोर्नुकमिति''** ऋग्वेदश्रुतिः[९]

## ३. ब्रह्मणो त्रिविधानन्त्यं

श्रीमन्मध्वमते ब्रह्मणो त्रिविधानन्त्यमुक्तं। तत्तु देशकालगुणानन्त्यमिति। देशानन्त्यं नाम सर्वदेशवृत्तित्वं, कालानन्त्यं नाम कालत्रयवृत्तित्वं (सर्वकालवृत्तित्वं), गुणानन्त्यं नाम सर्वगुणवत्वं। वस्त्वानन्त्यमिति ब्रह्मणो तत्र तत्र उच्यते। तदर्थस्तु सर्ववस्तुवृत्तित्वं न तु परमतरीत्या उक्तवस्त्वात्मकत्वम् । वस्त्वभिन्नत्वाङ्गीकारे जडेशाभिन्नत्वं स्यात् तत् स्वयं अद्वैतविरुद्धम् स्वव्याहतं च। जडेशयोः अभेदस्तु सर्वप्रमाणविरुद्धम्। न हि जडस्य चेतनत्वं कदापि प्राप्तुं शक्यम्। परस्परविरुद्धधर्मवत्वात्।

## ४. त्रिविधानन्त्यविषयकप्रमाणानि

**''देशतः कालतश्चैव गुणतश्च त्रिधा ततिः ।**
**सा समस्ता हरेरेव न ह्यन्ये पूर्णसद्गुणाः ।।** गी.ता.२-१७, परमश्रुतिः[१०]

[११]**''सत एव पदार्थस्य स्वरूपास्थितस्य यत्।**
**कैवल्यं परममहान् अविशेषो निरन्तरः''** ।। भा. ३-१२-२

तत्रैव तात्पर्ये ब्रह्मतर्कवचनं भागवतव्याख्यानपरत्वेन उदाहृतमाचार्यैः ।।

---

८. ब्र.सू.भा. पृ. ४४-४५ 
९. ऋ.सं. पृ. ११७
१०. गी.भा. पृ. २७३

तद्यथा

**''कालतो देशतो गुणतश्च परममहत्वं सतः परब्रह्मण एव।''** इति भा.ता.

**''कालकोटिविहीनत्वं कालानन्त्यं विदुर्बुधाः।**[११]
**देशकोटिविहीनत्वं देशानन्त्यं तथैव च।**
**गुणानामप्रमेयत्वं वस्त्वानन्त्यं विदो विदुः॥**

**आनन्त्यं त्रिविधं नित्यं हरेर्नान्यस्य कस्यचित्।**
**तस्य सर्वस्वरूपेष्वप्यानन्त्यं तु त्रिलक्षणम्''।**

सर्वदेशवृत्तित्वरुपदेशानन्त्यसद्भावेऽपि भगवतो परिच्छेदोऽपि अवतारादिषु विद्यत एव इत्युक्तं तत्रैव।

**''तथापि देशतस्तस्य परिच्छेदोऽपि विद्यते।**[१२]
**परिच्छेदस्तथा व्याप्तिरेकरुपेऽपि युज्यते।**
**तस्याचिन्त्याद्भुतैश्वर्याद्व्यवहारार्थमेव च॥''**

-भा.ता. इत्यादि ब्रह्मतर्के

**''देशतः कालतश्चैव वस्तुतश्च त्रिधा हरेः।**
**यथाऽनन्त्यं न चान्यस्य प्रकृतेर्देशकालतः।**
**तथा शब्दस्य कालस्य देशानन्त्यं च कालतः॥''**

-भा.ता.(३)१२-४ ब्रह्मवैवर्ते

## ५. प्रकृतिदेशकालानन्त्यानि ब्रह्माधीनानि

हरेः त्रिधा ततिः पूर्वोक्तवत्। प्रकृतेस्तु देशकालतः आनन्त्यं वर्तते। सर्वदेशकालव्यापिनी खलु प्रकृतिरित्यर्थः। तथा, शब्दस्य कालस्यापि देशानन्त्यं,

---

११. भा.ता. पृ. १४८, १४९

१२. भा.ता. पृ. १५०

कालस्य देशानन्त्यं युज्यते। अथवा देशकालयोः परस्परवृत्तित्वं स्ववृत्तिश्च। देशकालौ उभावपि ब्रह्माधीनौ। ब्रह्म तु सर्वाधारः सर्वतन्त्रस्वतन्त्रः। तदुक्तम् पैङ्गिश्रुतौ

[१३]**''द्रव्यं कर्म च कालश्च स्वभावो जीव एव च।**

**यदनुग्रहतः सन्ति न सन्ति यदुपेक्षया॥''**

-भागवतेऽपि पठ्यते (२)१०-१२२

इति पैंगिश्रुतौ कालस्य हर्यधीनत्वमुक्तम्। देशोऽपि जडत्वात् स्वभावतः हर्यधीनः इति कैमुत्येनैव सिध्यति कालवत्।

## ६. ब्रह्मणो अनन्तगुणाः

ब्रह्मगुणास्त्वनन्ता इत्युक्तम्। के ते इत्युक्ते वेदादिशास्त्रोक्तसच्चिदानन्दात्मे-त्यादयः सौन्दर्यौदार्यधृतिभृतिशुचिव्याप्तिकारुण्यक्रौर्यदयादाक्षिण्यवैराग्यवाक्या-टवचातुर्यादयः गुणा* ग्राह्याः। सृष्ट्यादिकर्तुत्वं प्रागेवोक्तम्। एवं एते चापरे गुणाः प्रत्येकमपि रमाद्यपेक्षया पूर्णतया वर्तन्ते भगवति ब्रह्मणि वासुदेवे। यद्यपि गुणज्ञानं वेदाद्यध्ययने कृते एव ज्ञायते तथापि सर्वेषां गुणानां ज्ञानं सर्वैर्ज्ञातुं न शक्यम्। अयं गुणः एतेन वेदेन ज्ञायते। अस्यां ऋचि एतद्गुणो वा गुणा वा प्रतिपाद्यते प्रतिपाद्यन्ते इति ज्ञातुं न सर्वैः शक्याः। तादृशविवेकाभावात् सर्वेषां। येषां यावत् ज्ञातुं शक्यते तेषां तावदेव ज्ञायते। तदेव योग्यता नाम जीवस्य यः हठ इत्यपि शास्त्रे प्रयुक्तः। तस्मादेव कारणात् जीवानां ब्रह्मोपासने एकगुण चतुर्गुण बहुगुण अनन्तगुणोपासकप्रभेदः उक्तः।

गुणानन्त्यविषये प्रमाणानि -

---

१३. भा. पृ. ७३

* भागवतप्रथमस्कन्धे, वाल्मीकीये रामायणे चोक्तकेचनगुणाः परिशिष्टे ८,९,१० प्रदत्ताः। (पृ. २४५-२४८)

“**विष्णोर्नुक**”मिति श्रुतिः। ऋ.सं. १-१५४-२

“**विष्णोर्नुवीर्यगणनां कतमोर्हतीव**” इति भागवतवाक्यम्। विष्णोर्नुकमिति श्रुतिव्याख्यानपरम्[१४]

[१५]“**नान्तं गुणानामगुणस्य जग्मुः योगेश्वरा ये भवपाद्ममुख्याः**”।

-भा. १-१८-१४

[१६]“**योऽनन्तशक्तिः भगवाननन्तो महद्गुणत्वाद्यमनन्तमाहुः।**”

(१)१८-१९

अत्र शक्तेरानन्त्यमुक्तं हरेः। तेन चानन्तशब्दप्रयोगोऽपि। शक्तेरानन्त्यरूप-शब्दप्रवृत्तिनिमित्तेन अनन्तशब्दव्यवहारः प्रतिपादितः। शक्तिर्नाम परैरप्रतिहतता।

[१७]“**नान्तं विदाम्यहममी मुनयोऽग्रजास्ते**
**मायाबलस्य पुरुषस्य कुतोऽवरा ये।**
**गायन् गुणान् दशशतानन आदिदेवः**
**शेषोऽधुनापि समवस्यति नास्य पारम्॥**” भा. (२)-७-४१

अत्र ब्रह्मशेषेशमुनिपुङ्गवैः ज्ञातुमशक्यगुणवारिधिर्नारायणः इति उक्तम्।

[१८]श्रीब्रह्मशेषरुद्रेन्द्रादिसमस्तदेवाः मिलिता अपि भगवद्गुणेषु एकमपि गुणस्यवैभवपारं न जानन्ति इत्यत्र श्रीमदादित्यपुराणवेङ्कटेशमाहात्म्यवचनानि प्रमाणपदवी मारुहन्ति। तद्यथा।

**अनन्तान् सुविशेषांश्च पश्यन्ती श्रीर्निरुत्तरम्।**

---

१४. भा. पृ. ६७
१५. भा. पृ. ४३
१६. भा. पृ. ४४
१७. भा. पृ. ६७
१८. टि.टि.डि. वें.मा.(२) पृ.२३२-३५, २४३, २४५, २४७, परिशिष्टे विशेषश्लोकाः दत्ता पृ.

**स्तोतुकामाऽक्षीणदीक्षा हर्षादाश्चर्यसागरे।।** ४७

**त्वत्पादपद्ममाहात्म्यमप्यनन्त त्रिविक्रमम्।**

**यत्कनिष्ठाङ्गुलिनखमप्यग्रगुणसंयुतान् ।।** ४८ इत्यादयः

तस्मादुक्तं पण्डिताचार्यैः सुमध्वविजये -

[१९]**''न रमाऽपि पदाङ्गुलीलसन् नखधूराजदनन्तसद्गुणान् ।**

**गणयेद्गणयन्त्यनारतं परमान् कोऽस्य परो गुणान् वदेत्''।।** ७-४६

आचार्यैरुक्तं सर्वं पिण्डीकृत्य निर्णये[२०]

**''एतैः सुरादिभिरतिप्रतिभातियुक्तैः**

**युक्तैः सहैव सततं प्रविचिन्तयद्भिः।**

**पूर्तेरचिन्त्यमहिमः परमः परात्मा**

**नारायणोऽस्य गुणविस्तृतिरन्यगा क्व।।''**

[२१]**''न ह्यन्तस्त्वद्विभूतीनां सोऽनन्त इति गीयते।।''** (४)-३०-३१

भगवतो विभूतीनां विशेषव्याप्तिरूपाणामानन्त्यात् अनन्तशब्दवाच्यत्वं हरेरुक्तमत्र। गीतायामपि एवमेवोक्तं विभूत्यनन्तविषये।

[२२]**''नान्तोऽस्ति मम दिव्यानां विभूतीनां परन्तप।''** १०-४०

[२३]**''मत्स्यकूर्मवराहाद्यैरवतारैः कृतानि मे।**

**कर्माण्यनन्तपुण्यानि सूर्यं सोमं हुताशनम्।।''**भा. (८)-४-२१

अत्र भगवतो असङ्ख्यावताराणि - तैः कृतानन्तपुण्यकर्माणि

---

१९. म.वि. पृ. ३३६

२०. म.ता.नि. पृ. ८२-८४

२१. भा. पृ. २४८

२२. गी.भा. पृ. १७३

२३. भा. पृ. ४२०

निरूपितानि। अतो तस्मिन् न दोषावकाश इत्यपि ज्ञायते।

[२४]**''जन्मकर्माभिधानानि सन्ति मेंऽग सहस्रशः।**

**न शक्यन्तेऽनुसंख्यातुं अनन्तत्वात् मयापि हि।''** भा. (१०)-५४-३७

अत्रापि हरेः अनन्तजन्मानि - अवतारूपाणि - अनन्त नामानि विद्यन्ते इत्युक्तम्। तस्मात्ताननुसङ्ख्यातुं गणयितुं न शक्यन्ते स्वयं मयापि इति कृष्णो वदति उद्धवाय। निमित्तं तु तेषामानन्त्यं स्वभावतः न तु अशक्त्या भगवतः कृष्णस्य।

[२५]अन्यत्रापि भागवत तात्पर्ये -

**''अनन्तमिति वेत्तीशस्त्वनन्तमनन्तवत्तथा।**

**अनन्तस्य हि सङ्ख्याने न तु सर्वज्ञता भवेत्॥**

**अनन्तमिति वेत्तीशः प्रत्येकं च विशेषतः।**

**सर्वज्ञत्वान्न सङ्ख्यानमसङ्ख्यस्य कुतो हि सा॥''**

-इति च(११)१६-३९

अत्रापि गुणानन्त्यं प्रतिपादितम्।

भूमेः रजकणान् गणयितुं कथञ्चित् शक्योऽपि भगवद्गुणानुसङ्ख्यानं अशक्यं इति अत्र अभिप्रेतार्थः॥

[२६]विष्णुमाहात्म्यलेशस्यानन्तभागोऽपि रमाब्रह्मादिदेवेषु नास्ति। तस्मात् हरिरेवानन्तगुणपूर्णः इत्युक्तं गीताभाष्ये **''अच्छेद्योऽयमदाह्योऽयं''** इति

---

२४. भा. पृ. ६५४ २५. भा.ता. पृ. ५५७, ५५८

२६. गी.भा. पृ. १९, २१

गीताव्याख्याने आचार्यैः। (२-२४)

**''अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च।**

**नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः॥''** २-२४

तत्र गीताभाष्यं

**''सत्यं सत्यं पुनः सत्यं शपथैश्चापि कोटिभिः।**

**विष्णुमाहात्म्यलेशस्य विभक्तस्य च कोटिधा॥**

**पुनश्चानन्तधा तस्य पुनश्चापि ह्यनन्तधा।**

**नैकांशसममाहात्म्याः श्रीशेषब्रह्मशङ्कराः॥''** ''इति नारदीये''

तस्मात् नारायणस्यैव देशतः कालतः गुणतश्चानन्त्यं सिध्यति।

# ३.३. ''ब्रह्मणो अनन्तगुणवत्वे सर्वशब्दवाच्यत्व-रूपहेतुनिरूपणम्''

## १. पीठिका

द्वैतमतरीत्या नारायणाख्यं परंब्रह्मं अनन्तगुणपरिपूर्णः यः पूर्वत्र निरूपितः। तत्कथं सिध्यति इति चेत् शास्त्रवाक्यसमन्वयेनेति ब्रूमः। शास्त्रवाक्यं खलु अत्र ब्रह्मगुणप्रतिपादकत्वेन चिन्तितम्। तद्वाक्यं अनेकपदोपेतम्। पदं वर्णसमूहः। सर्वमिदं न केवलं शास्त्रे व्याहृतं किन्तु लौकिकवाक्येष्वपि। वैदिकं लौकिकवाक्यार्थं वा भाषाध्ययनं विना न शक्यमिति भाषालक्षणं प्रथममुक्त्वा अनन्तरं भाषाघटकादीन् वाक्यपदवर्णविषयान् चिन्त्यते अस्मिन् प्रकरणे।

## २. भाषालक्षणम्

सामाजिकाः परस्परं विचारविनिमयार्थं सम्पर्कसाधनतया यान् सङ्केतान् मुखतः उच्चारयन्तः यां शब्दव्यवस्थां प्रयुञ्जते सैव हि **भाषा** नाम। तथा च भाषायाम् :ह्व

(१) मुखोच्चरितयादृच्छिकशब्दसङ्केतैः सहितः वर्णसमूहः वर्तते।

(२) मानवानां मध्ये परस्परविनिमयार्थं भाषा सम्पर्कसाधनमेव।

(३) मानवाः विशिष्टसंस्कृतेः भागिनः।

(४) भाषा खलु एका शब्दव्यवस्था।

## ३. भाषाघटकानि

भाषायां वाक्यानि, वाक्ये पदानि, पदे वर्णो वर्णसमुदायो वा वर्तन्ते यैः हार्दाभिसंधयो वा परस्परं विनिमयं प्राप्नुवन्ति।

(1) A Language is a system of arbitrary vocal symbols by means of which a social group communicates and cooperates.

(2) "Language is the institution where by humans Block & Trager communicate and interact by means of habitually used oral-auditory arbitrary symbols."

Essay on Language by Hall

(3) "Language is also the biggest barrier to human progress. Old perceptions are frozen into language and force us to look at the world in that way". –Edward De Bono

(4) "Fundamental function of the language is to link meaning and expression to provide verbal expression for thoughts and feelings." –Edward Finegar

## ४. सर्वोऽपि शब्दः अर्थवानेव

यादृच्छिकवर्णो वा पदं वा उपयुक्तं निर्दिष्टार्थवद्भवति। नानर्थकं पदं वा वर्णो वा नैव भवति यदा कौशलेन प्रयुक्तं स्यात्। यदा पदं वाक्यं वा श्रूयते तदा तत्स्वरूपं जानात्येव लोकः, प्रश्नार्थकं, वस्तुस्थितिनिरूपकं उद्गारपूर्णं वा किञ्चिदन्यद्वेतिं। एवं प्रत्यक्षरं प्रतिपदं अर्थवदेव श्रूयते लोके। निघंटुः कोशो वा प्रत्यक्षरं प्रतिपदं सार्थवदेव भणति इति सर्वेषामनुभवसिद्धम्। कश्चिदज्ञः अकुशलो मत्तः निरूपयुक्तं पदं प्रयुक्ते न तु समधिगतशास्त्रः।

## ५. शब्दार्थसम्बन्धः

एवं प्रतिपदं वर्णो वा अर्थवदेव शब्दार्थयोः [३]अविनाभावसम्बन्धवत्वात्। **तदुक्तं रघुवंशे[१]-**

‘‘**वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये।**’’ इति।

तत्र मल्लिनाथव्याख्यानेऽपि शब्दार्थाविनाभावसम्बद्धमुक्तम्।

‘‘**वागर्थाविव एक पदम्। इवेन सह नित्यसमासो विभक्त्यलोपश्च। पूर्वपदप्रकृतिस्वरत्वं चेति वक्तव्यम्। ....... वागर्थाविव शब्दार्थाविव सम्पृक्तौ नित्यसम्बद्धावित्यर्थः। नित्यसम्बद्धयोः उपमानत्वेनोपादानात्। ‘‘नित्यशब्दार्थसम्बद्धः’’ इति मीमांसा।**’’

‘‘**औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः**’’। जैमिनीसूत्रं १-१-१

न केवलं लोके वेदेऽपि सर्वेऽपि शब्दा अर्थवन्त एव। वेदे वा वैदिके वा न कोऽपि वर्णो शब्दो अनर्थक इति श्रीमदाचार्याः। अपौरुषेयत्वात् प्रमाणतमत्वात् वेदानाम्।

---

१. र.व. पृ. १६

तदुक्तमाचार्यैः ऐतरेयभाष्ये[२]-

**''उक्तं च भगवता व्यासेन'' इति।**
**नानर्थकः स्वरो वापि वर्णो वा कुत्रचिद्भवेत्।**
**पदं वाक्यं कुतश्च स्यान्नाल्पार्थमपि कुत्रचित्।**
**उच्चारार्थमपि वा नास्ति किञ्चित् स्वरादिकम्।**
**महार्थमेव सर्वं हि वेदे वा वैदिकेऽपि वा॥'' इति**

## ६. उपसर्गा अपि न व्यर्थाः

न केवलं स्वरवर्णानां महार्थत्वं किं तु उपसर्गाणामपि तथात्वमुक्तं तत्रैव।

**''न च निरर्थकत्वमुपसर्गस्याङ्गीकर्तुं युक्तम्। न ह्यार्षेषु वेदादिषु व्याकरणनिरुक्तादिषु चोपसर्गाणां वैयर्थ्यमङ्गीकृतं कुत्रचित्।''**

तस्मात् सर्वेऽपि वर्णा पदानि वावयवानि च विशेषतो वेदे वैदिके वा ग्रन्थे अर्थवन्त्येव।

## ७. शब्दतात्पर्यम्

सन्तु शब्दाः अर्थवन्तः। तेषां तात्पर्यं कुत्रेति चिन्तायां एष विमर्शो जायते।

शब्दास्तावत् लौकिकवैदिकभेदेन द्विविधाः। लौकिकाः पौरुषेयग्रन्थ-निबन्धनात्मकाः महाभारतादयः वेदानुसारिणः तदन्ये संस्कृततदितरभाषासु रचिताश्च। यथा काळिदासादीनां संस्कृतवाङ्मयं तदितरभाषाणां ग्रन्थराशयश्चेति। वैदिकास्तु वेदाः तदनुसारिमहाभारतादयोऽपि वक्तुं शक्यते। वैदिकलौकिकत्वेन महाभारतादिग्रन्थानां सङ्ग्रहात्।

लौकिकग्रन्थानां तात्पर्यं तु तत्तद्ग्रन्थावमर्शनेन ज्ञायते शब्दानां

---

२. उ.प्र.भा. पृ. २०९

रूढ्यर्थमाश्रित्य। परं तु वेदवैदिकग्रन्थानां न तथा रुढ्यर्थमात्रमाश्रित्य तात्पर्यं वक्तुं शक्यं यतो ग्रन्थकर्तुरभिप्रायं तात्पर्यलिङ्गानि चाश्रित्य तद्वक्तव्यत्वात् (वक्तुमुचितत्वात्)।

तथा च रूढ्यर्थं शब्दावयवार्थं चाश्रित्य तात्पर्यं ग्राह्यमिति विवेकः।

## ८. वृत्तिः

**पदपदार्थयोः सम्बन्धवाचको वृत्तिशब्दः इति सर्वे वादिनः अभ्युपयन्ति। वृत्त्यैव शब्दोऽर्थे प्रवर्तते। तथा च वर्तते = प्रवर्तते शब्दोऽर्थे अनयेति व्युत्पत्या वृत्तिशब्दः पदपदार्थयोः सम्बन्धं वक्ति। तदुक्तं तर्कताण्डवे।**[३]

**''वृत्तिश्च शब्दस्य तात्पर्यरूपमर्थप्रतिपादकत्वम्।'' अथवा [४]''अतः शब्दस्य तात्पर्यरूपार्थप्रतिपादकत्वरूपः पदपदार्थसम्बन्ध एव वृत्तिः।'' यथा गङ्गायां घोषः इत्यत्र गङ्गापदस्य प्रवाहे वृत्यभावात् तीरे तात्पर्यग्रहणवत्।**

## ९. वृत्तिभेदाः

द्वैतमते वृत्तिस्त्रिधा भिद्यते परममुख्यवृत्तिः, मुख्यवृत्तिः, अमुख्यवृत्तिश्चेति। परममुख्यवृत्तिरपि महायोगः महायोगरूढिश्चेति द्विविधा। इतरेषां भगवदितरविषयत्वात् न तेऽत्र व्रियन्ते।

सर्वेऽपि वर्णा शब्दाश्च अर्थवन्तश्चेत्युक्तम्। तेषां तात्पर्यं परममुख्यवृत्या भगवत्येव हरौ न तु रूढ्यर्थेषु इति तत्र प्रमाणान्यपेक्ष्यन्ते।

सन्ति हि हरेः सर्वशब्दवाच्यत्वे श्रुतयः स्मृतयश्च प्रमाणत्वेन ।

**(१) ''सर्वे वेदा यत्पदमामनन्ति।''**[५]

---

३. त.तां. ३। द्वि.प.पृ. ११०

४. प.स्व.वि.पृ. ३१

५. उ.प्र.भा. पृ. ३५

**(२) ''नामानि सर्वाणि यमाविशन्ति तं वै विष्णुं परममुदाहरंति''**
**भाल्लवेयश्रुतिः।**[६]

**(३) ''यो देवानां नामधा एक एव तं संप्रश्नं भुवना यन्त्यन्या,**
**इत्याद्याः।**[७]

स्मृतयश्च

**(१) ''वेदे रामायणे चैव पुराणे भारते तथा।**[८]
**आदावन्ते च मध्ये च विष्णुः सर्वत्र गीयते''।। इति हरिवंशेषु**
**(ब्र.सू. भाष्योदाहृत (१)-१-१-१)**

**(२) वेदैश्च सर्वैरहमेव वेद्यः। (गीता)**[९]

**(३) वेदाक्षराणि यावन्ति पठितानि द्विजातिभिः।**
**तावन्ति हरिनामानि कथितानि न संशयः।।**[१०]

**(४) ''मां विधत्तेऽभिधत्ते मां विकल्पोऽपोह्य इत्यहं।''**[११]
**भा.(९)२१-४-३**

**(५) ''अस्यैव सर्वनामानि व्यतिरिक्तस्य सर्वतः।**
**यः स्वतन्त्रः सदेवैकः स विष्णुः परमो मतः।''**[१२]

सर्वनामवत्वं च भगवतः न सर्वभिदोक्त्या। ऐक्यस्य निराकृतत्वात् द्वैतासिद्धान्ते। अपि च सर्वनामवत्वं सर्वतः व्यतिरिक्ततः इति प्रमाणे स्पष्टोक्तेः।

**''सर्वशब्दाभिधेयत्वं सर्वान्तर्यामकत्वतः।**[१३]
**न तु सर्वस्वरूपत्वात् सर्वचित्तो यतो हरिः।।'' इति भविष्यत्पुराणे**

---

६,७. उ.प्र.भा. पृ. १८८
८. ब्र.सू.भा. (२) पृ. ९
९. गी.भा. पृ. २२५
१०. स्मृतिः
११. भा.ता. पृ. ५८४, पू.सं.भा. पृ. ८२३
१२. स्मृतिः
१३. वि.वि.व्या. पृ. ७, भा.ता. ४-८-४५

इति भविष्यत्पुराणवचनं सर्वशब्दाभिधेयत्वं व्याख्याति। तथा च सर्वेषां वेदवैदिकवचनानां अर्थवत्वं हरिपरत्वं सिद्धम्।

## १०. वेदेतिहासपुराणवेद्यत्वं प्रतिपाद्यत्वं मुख्यतः हरेरेवेति समर्थनम्।

(१) [१४]''अः इति ब्रह्म'' (ए.उ. २-३-८)

(२) [१५]''अकारो वै सर्वा वाक्'' (ए.उ. २-३-६),

(३) [१६]''यद्वै किञ्च एतदध्यगीष्ठा नामैवैतन्नाम वा ऋग्वेदो यजुर्वेदः सामवेद आथर्वणश्रुत्यर्थः'' (छां-७- नारदसनत्कुमारसंवादः)

(४) [१७]''अकारः सर्ववागात्मा परब्रह्माभिधायकः।'' गरुडपुराणवचनम्

(५) ''यद्वा च ओमिति यच्च नेति यच्चास्याः क्रूरं यदु चोल्बणिष्णु तद्वियूय कवयोऽन्वविन्दन्नामायत्ता समतृप्यञ्छ्रुतेऽधि''[१८] (ए.उ.)

इत्यादिषु सर्वविद्यानां ब्रह्मनामत्वात् भगवद्गुणाभिधायकत्वमुक्तम्।

## ११. नामकाचकाः गुणवाचका एव

भवन्तु सर्ववेदाः भगवन्नामवाचकाः। कथं तेन गुणाभिधायकत्वमिति चेत्।

सर्वाण्यपि नामानि भगवद्गुणवाचकत्वेनैव निरुक्तानि तद्व्याख्यानेषु पुराणादिषु। [१९, २०]अद्वैतविशिष्टाद्वैतव्याख्यानेषु अपि तत्र तत्र तदङ्गीकारात् हरिवंशविष्णुपुराणादिषु नामव्याख्यानदर्शनाच्च। विष्णुसहस्रनामस्तोत्रारंभेऽपि तदुक्तत्वात्

---

१४. उ.प्र.भा. पृ. २४२    १५. उ.प्र.भा. पृ. २३०

१६. उ.प्र.भा. पृ. ४७८    १७. ब्र.सू.भा. पृ. ५

१८. उ.प्र.भा. पृ.    १९. वि.स.शां.भा पृ. २७,३२-३८,५४,५५ ....१३८ ....

२०. वि.को. (१) पृ. १८४

**''यानि नामानि गौणानि विख्यातानि महात्मनः**

**ऋषिभिः परिगीतानि तानि वक्ष्यामि भूयते।।''** इत्यादिषु।

अत्र गौणानि इति शब्दः नाम्नां गुणवत्वपरः न तु अप्रधानं, अमुख्यं इति अर्थवाची। नो चेत् ''विख्यातानि'' ''परिगीतानि'' इति व्यर्थः स्यात्। ''भूतये'' ''मोक्षाख्य ऐश्वर्याय'' इत्यपि व्यर्थः स्यात् यदि गौणशब्दस्य अप्रधानत्वेनार्थः अङ्गीक्रियते। तस्मात् सर्वेऽपि वेदाः भगवद्गुणब्रुवा एव न तु निर्गुणब्रह्मपराः। तदपि परममुख्यतयैव अङ्गीकार्यम्।

## १२. ॐकारवाच्यत्वात् अनन्तगुणपूर्णः

**''ॐकारस्तावद्ब्रह्मवाची'' ''ओमिति ब्रह्म''**[२१] (तै.उ. १)

**''ओमित्येतदक्षरमिदं सर्वं''**[२२] (मां.उ. १),

**''ओमित्येतदक्षरमुद्गीथमुपासीत''**[२३] (छां. १) ;

**''ओं तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः** (गी.[२४] १७-२३);

**वेद्यं पवित्रमोङ्कारः ऋक्सामयजुरेव च''** (गी.[२५] ९-१७)

इत्यादिस्मृतिभ्यः विष्णुरेव ओंकारवाच्यः स एव ऋगादिप्रतिपाद्यः इत्यप्युच्यते। तस्मादुक्तमाचार्यैः

**''ओतत्ववाची ह्योंकारः वक्त्यसौ तद्गुणोतताम्।''**(अ.व्या.१-१-१)

[२६]अनेनेदमनुमानमुक्तं भवति।

[२७]''ब्रह्म ॐकारवाच्यम् गुणपूर्तिरूपोङ्कारप्रवृत्तिनिमित्तवत्वात्।'' यत्

---

२१. उ.प्र.भा. पृ. १२४
२२. उ.प्र.भा. पृ. ९२
२३. उ.प्र.भा. पृ. ३२८
२४. गी.भा. पृ. १३९
२५. गी.भा. पृ. १५५
२६. ब्र.सू.भा. पृ. २८६
२७. ऋ (१) मं.मं. पृ. ५

यच्छब्दप्रवृत्तिनिमित्तवत् तत् तच्छब्दवाच्यम्। यथा घटादिपदवाच्यं घटादिकमिति।

यद्वा ''ॐकारो ब्रह्मवाची तन्निष्ठधर्मप्रवृत्तिहेतुकत्वात्। सामान्यव्याप्त्या संमतवदिति''।

उपर्युक्तप्रमाणैः इदमत्रोक्तं भवति। वेदोङ्कारयोः व्याख्यानव्याख्येयताभावः सिद्धो भवति। तदुक्तं छान्दोग्ये। ''ओङ्कारेण सर्वा वाक् संतृण्णा (२-१३)। तस्मात्। विष्णुरेव सर्ववेदप्रतिपाद्यः यतः तद्व्याख्येयोङ्कारार्थत्वात्। यो यद्व्याख्येयार्थः स तद्व्याख्यानप्रतिपाद्यः। यतः संमत इति वा। वेदाः विष्णुपराः विष्णुपरोङ्कारव्याख्यानत्वात्।

## १३. सकलवेदेतिहासपुराणानि ॐकारार्थ एव

किं च ॐकारार्थस्तु व्याहृतयः, व्याहृतीनां अर्थस्तु गायत्री, तस्या अर्थस्तु पुरुषसूक्तं, तदर्थविस्तार एव ऋगादयो वेदाः इतिहासः पुराणं च पञ्चरात्रम्। तदुक्तं तैत्तिरीय भाष्ये।[२८]

**''प्रणावार्था व्याहृतयः व्याहृत्यर्था ऋगादयः।**
**इतिहासः पुराणं च पञ्चरात्रं च सर्वशः''**

**''सम्यग्व्याहरणाद्विष्णोः श्रुता व्याहृतयस्तिति॥''**

-इत्यादि व्याहृतिसारे॥

किं च अनुव्याख्यानेऽपि

**''स एव भर्गशब्दार्थः व्याहृतीनां च भूमतः।**[२९]
**भावनाच्चैव सुत्वाच्च सोऽयं पुरुष इत्यपि॥''** I - 1-1-1

---

२८. उ.प्र.भा. पृ. १२२

२९. ब्र.सू.प्र. पृ. २८६

तद्विवृतं सुधायाम्[३०]

**“प्रणवार्था व्याहृतयः” इत्याद्यागमेन तिसृणां व्याहृतीनां वर्ण-त्रयात्मकोङ्कारव्याख्यानतयाऽवगतत्वात्। व्याख्यानव्याख्येययोरेक-विषयता सुप्रसिद्धेति। भूमा पूर्णत्वं ततो भूः। .......।” व्याहृत्यर्थतया तावत्परमेश्वरस्य गायत्रीप्रति-पाद्यताऽवगम्यते। ..... गायत्र्यर्थत्वात् पुरुषसूक्तार्थोऽपि स एवेति सिध्यति। ...... “तद्वेदः पौरुषं सूक्तम् वेदाः पुरुषसूक्तगाः” (तन्त्रसार) इत्याद्यागमसिद्धत्वात्। ....... सिद्धे च पुरुषसूक्तार्थत्वे विष्णोः किं स्यात्। सर्ववेदार्थत्वमेव सिद्धम्।”**

एतेन ओंकारव्याहृतिगायत्रीपुरुषसूक्तवेदानां पूर्वोत्तरयोः परस्परहेतु-हेतुमद्भावः व्याख्येयव्याख्यानत्वं विष्णोश्च सर्वशास्त्रप्रतिपाद्यत्वं उक्तप्रमाणै-रवगम्यते।

## १४. सर्ववेदप्रतिपाद्यः प्राणः हरिरेव

ऐतरेयोपनिषदि सर्ववेदानां घोषादीनां व्याहृतेश्च भगवत्परत्वमभिहितम्। तद्यथा

[३१]**“ता वा एताः ऋचः सर्वे वेदाः सर्वे घोषाः एकैव व्याहृतिः प्राण एव प्राण ऋच इत्येव विद्यात्।”** इति। तत्रैव भाष्यम् -

**“न केवलं ऋष्यादीनां नाम भगवतः, सर्वे वेदा अपि तस्यैव नामानि। किमु च वेदाः। समुद्रमेघवृक्षपतनभेरीताडनादिसर्वघोषा अपि तस्यैव नामानि यथायोग्यं योजनीयानि।” प्राणे नारायण एवेति विद्यात्।**

अस्य भाष्यस्य तत्रोदाहृतमाचार्यैः बृहत्संहितावचनानि प्रमाणत्वेन।[३२]

---

३०. ष.सु. (१) पृ. १९९-२०३ ३१. उ.प्र.भा. पृ. १८७

३२. उ.प्र.भा. पृ. १८९

**''तस्यैव मुख्यनामानि समाकृष्येतरेष्वपि।**
**उपचारात्प्रवर्तन्ते व्यवहारप्रसिद्धये।''**

**''यथैव सर्वनामानि प्रवर्तन्ते च मारूते।**
**मुख्यतः सर्वनामा तु विष्णुरेको न चापरः।**
**तस्मात्प्राणादिशब्दाश्च विष्णावेव हि मुख्यतः।**

एवं सर्ववेदोक्तानन्तनामवत्वं मुख्यतः हरेः तदनन्तरं मारुते प्रवर्तते इति प्रमाणाभिसन्धिः।

## १५. हिरण्यगर्भादीनां न वेदप्रतिपाद्यत्वं परममुख्यवृत्या

यद्यपि केचन वेदाः विष्णोः सर्ववेदप्रतिपाद्यत्वं साधयन्तोऽपि

[३३]**''हिरण्यगर्भः समवर्तताग्रे''**

**''ज्ञात्वा शिवं शान्तिमत्यन्तमेति'' विश्वस्मादिन्द्र उत्तरः''**

इत्यादीनां ब्रह्मशिवेन्द्रादिसर्वोत्तमप्रापकाणां श्रुतीनां तु का कथा? कथं तेषां समन्वयः। न ह्यनेकेषामेकदा सर्वोत्तमत्वं युज्यते। नापि देशकालादिव्यवस्थया विरोधपरिहारः शक्यपरिहारः। सत्यम्।

**''यः स्वतन्त्रः सदेवैकः स विष्णुः परमो मतः''**

**तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः''**

इत्यादौ सदोत्तमत्वं विष्णोः उक्तत्वात् हिरण्यगर्भादीनां तथाभावात्। अपि च **''नामानि सर्वाणि यमाविशन्ति तं वै विष्णुमुदाहरन्ति''** इत्यत्र सर्वाण्यपि नामानि इत्युक्तेः हिरण्यगर्भादीनामपि नाम्नां विष्णावेव अन्तर्भावात् विष्णोरेव सर्वशब्दवाच्यत्वं सिध्यति नेतरेषां देवानाम्।

किं च सर्वेऽपि शब्दाः सविशेषणाः कमपि गुणमभिदधात्येव। यद्येकोऽपि

---

३३. ऋ.सं. पृ. ७३४

शब्दः ब्रह्म नाभिदधाति तदा तेन शब्देनोच्यमानो गुणः ब्रह्मणि न सिध्येदिति सर्वगुणत्वभङ्गः। इत्थं गुणपूर्णत्वसिध्यर्थं चापि विष्णोः सर्वशब्दवाच्यत्वं अङ्गीकरणीयमेव। प्रमाणमप्यस्तीति पूर्वोमेवोक्तेः नायमगतिका गतिः किं तु अभ्युपगम्यवाद एव।

ननु सर्वशब्दवाच्यत्वे परमात्मनि दोषवाचकशब्दानां दुःखिबद्धकुबुद्धि-रित्यादि वाच्यत्वमपि कुतो न स्यात्। तथा गुणपूर्णत्वसिद्धौ सर्वशब्दमध्ये दोषवाचकशब्दाङ्गीकारेण विष्णोः दोषाङ्गीकारप्रसङ्गात् अनिष्टापत्तेः। तदा तदभावरूपगुणाभावात् कथं गुणपूर्णता इति शङ्का जायते। सत्यं। गुणपूर्णत्वसिध्यर्थं सर्वशब्दाङ्गीकारः अवर्जनीय एव। न च तन्मात्रेण दोषप्रसक्तिः विष्णोः। दुःखीत्यादिशब्दा अपि गुणवाचका एव ''तदधीनत्वात् अर्थवदिति'' न्यायेन। तदुक्तमनुव्याख्याने।[३४]

**''दुःखिबद्धावराद्यास्तु तदधीनत्वहेतुतः ।**
**शब्दा ब्रह्मणि वर्तन्ते राज्ञि यद्वत्पराजयः''॥ अ.व्या. (१)-४-१**

**स्वातन्त्र्यापेक्षया विष्णौ दोषो नामङ्गलोक्तितः।**
**बहुभुक्त्वं यथा दोषो नृषु नैव हरौ क्वचित्॥''**

इदमत्रावधेयम् । [३५]दुःख्यादिशब्दो नैव नियमेन न तद्वाचकः। किन्तु तदस्तीति तत्सम्बन्धमात्रम्। तदस्यास्तीति अस्मिन्निति मत्वर्थे ''अत इनि ठनौ'' इति इनि प्रत्यये दुःखीति निष्पत्तेः। सम्बन्धश्च समवाय इव स्वस्वामिभावोऽपि भवति। धनं हि न देवदत्ते वर्तते किं तु तद्गृहे मञ्जूषायां (विशिष्टसंस्थायां ब्यांके इति अपभ्रष्टभाषायां) तथापि स्वस्वामिभावसम्बन्धमात्रेण धनीति प्रयोगवत् दुःखं न परमात्मनि। किं तु जीवेष्वेव।

**''अदुःखमितरत्सर्वं जीवा एव तु दुःखिनः''।** इति श्रुतेः।

तथापि जीवगतदुःखनियन्तृत्वेन परमात्मनि दुःखीत्यादि शब्दप्रवृत्तिः॥

---

३४. ब्र.सू.भा. पृ. ३३१, ३३२ ३५. प.स्व.वि.पृ. ६४

स्वस्वामिभावसम्बन्धमात्रेण कथं ब्रह्मणि दोषवाचकशब्दप्रवृत्तिरिति चेत् अर्थापत्या इति ब्रूमः। **"निरनिष्टो निरवद्यः" इति श्रुतिः हरेः निर्दोषत्वं, "नामानि सर्वाणि"** इति श्रुतिः दुःखीत्यादिशब्दान् स्वस्मिन् ब्रह्मणि आकर्षति। तथोर्विरोधपरिहारार्थं निरवकाशश्रुतिद्वयान्यथानुपपत्या दोषवाचकशब्दगुणनियन्तृत्वेनैव तत्पदप्रवृत्तिरभ्युपगन्तव्या इति शब्दप्रवृत्तिनिमित्तनिर्वहणं भवति।

## १६. निरवधिकस्वातन्त्र्यमेव प्रवृत्तिनिमित्तम्

तथा च परममुख्यवृत्यादिस्वीकारे निरवधिकस्वातन्त्र्यमेवात्र च प्रवृत्तिनिमित्तमिति मन्तव्यम्। तदुक्तं अनुव्याख्याने -

**"स्वातन्त्र्यं तद्गतत्वं च शब्दवृत्तर्हि कारणम् ।" (१)-४-१**

यथा स्वभटेषु युद्धे जयापजयवत्सु राज्ञि जयापजयं लोको वदति तथा परमात्मनि दोषवाचकशब्दप्रयोगो दृष्टत्वात् न काचित् अनुपपत्तिः।

## १७. कर्मकाण्डवाक्यानि हरिवाचकानि

इत्थं न केवलं साक्षाद्गुणवाचकानि सर्वाणि नामानि, आपाततः दोषवाचका इव दृश्यमानानि दुःखीत्यादिशब्दाश्च भगवत्पराणि किं तु कर्मकाण्डानीति वर्गीकृतान्यपि वेदभागाः ब्रह्मपराणि इति सिद्धान्तः। तथा हि। **"वसन्ते वसन्ते ज्योतिषा यजेत"** इत्यत्र प्रतिपदं परमात्मप्रतिपाद्यत्वेन व्याख्यातं अनुव्याख्याने। तद्यथा

[३७]**"जातमोतं हरौ यस्माज्योतिः षः प्राणरूपतः।**
**आयजेतश्चायजेतः वसन्तिश्च वसंस्ततः॥ (१)-४-२**

एवमेव हुंफट्, कवचम्, वषट्, वौषट्, स्वाहा, नम इत्यादीनामपि कर्मकाण्डीयशब्दानां समन्वयो भवति योगवृत्या दर्शिता च अनुव्याख्यानादिषु ।

---

३६. ब्र.सू.भा. पृ. ३३१    ३७. ब्र.सू.भा. पृ. ३३२

यद्यपि सर्वशब्दसमन्वयकृते हि यथार्थज्ञानं तेन मोक्षः तथापि तत्समन्वयप्रकारस्तु न सर्वशक्यः। तर्हि मन्दाधिकारिणां कथं मोक्ष इति चेत् तेषां समाश्वासार्थं "**सर्वशब्दसमन्वयसद्भाव ज्ञानमेव**" न तु तत्प्रकारसमवेतज्ञानम्। यथा दहरविद्यादीनां सप्तान्नज्ञानाद्यनेकेषामुपासनाकरणे अधिकाराभावेऽपि तज्ज्ञानमात्राधिकारः तद्वदत्रापि समन्वयसद्भावज्ञानम् (सर्वशब्दवाच्यत्वज्ञानं ईश्वरः सर्वज्ञः इति सामान्यतो ज्ञानम्)। तस्मात् द्वैतसम्प्रदाये स्तोत्रमिदं सुप्रथितम्[३८] :ह्ल

**"वेदाश्चोपनिषद्गणाश्च विविधाः साङ्गाः पुराणान्विताः**
**वेदान्ता अपि मन्त्रतन्त्रसहितास्तर्काः स्मृतीनां गणाः।**
**काव्यालङ्कृतिनीतिनाटकपराः शब्दाश्च नानाविधाः**
**श्रीविष्णोर्गुणनामकीर्तनपराः कुर्वन्तु नो मङ्गलम्"**॥

## १८. सर्वशब्दानां भगवद्वाचकत्वे अनुपपत्तिपरिहारः ।

सर्वशब्दानां भगवत्येव वाचकत्वे अनेकानुपपत्तयः प्रदृश्यन्ते।

(१) सर्वशब्दानां निर्वचनानुपपत्तिः (ज्योतिरिति शब्दे)।

(२) वसन्ते वसन्ते इत्यत्र कर्मानुष्ठानविलोप प्रसङ्गः

(३) अन्यत्रप्रसिद्धशब्दानां भगवति समन्वयाशक्यता (गच्छ, भुंक्ष्व इत्यादिषु)

(४) सर्वशब्दानां भगवत्येव समन्वयकरणात् शब्दस्यैव लोक अभावात् लोकव्यवहारविलोप-प्रसङ्गाख्यानुपपत्तयः प्रसज्येयुः।

एते दोषा नैव द्वैतमते संभवन्ति। भगवता बादरायणेन समन्वयाध्याये अन्यत्रैवप्रसिद्धशब्दसमन्वयपादे [३९](चतुर्थपादे) "**चमसवदविशेषात्**"

---

३८. श्री राजराजेश्वरतीर्थकृतम्

३९. ब्र.सू.भा. पृ. ७१, ७२

**''ज्योतिरुपक्रमात्तथा ह्यधीयत एके'', ''कल्पनोपदेशाच्च मध्वादिवद-विरोधः''** इत्यादिसूत्रेषु ((१)-४-१) एता अनुपपत्तयः निराकृताः। एतत्परिहारार्थमेव परमात्मानि परममुख्यवृत्तिः, अन्यत्र तु मुख्यवृत्तिरिति रीत्या मुख्यवृत्यैव भगवदितरवाचकत्वात् न लोकव्यवहारमात्रस्य लाक्षणिकत्वप्रसङ्गः इति समाधानं प्रदर्शितम्।

## १९. परममुख्यवृत्तिप्रभेदाः[४०]

महायोगः महायोगरूढिश्चेति सा द्विविधा।

निरवधिकं स्वतन्त्रं वा प्रवृत्तिहेतुमपेक्ष्य या शब्दवृत्तिः सा महायोगलक्षणा परममुख्यवृत्तिः।

निर्वचनलभ्योऽर्थो प्रवृत्तिहेतुः। इन्द्रज्योतिषादिशब्दानां विष्णौ महायोगः। तत्र प्रवृत्तिनिमित्तस्य परमैश्वर्यविश्वम्भरत्वादेः स्वतन्त्रस्य निरवधिकस्य च हरावेव सत्वात्।

यत्रार्थे प्रवृत्तिहेतोरनधिकत्वं तत्रैव प्रयोगबाहुल्यं स्याच्चेत् सा वृत्तिः महायोगरूढिनाम्नी परममुख्यवृत्तिः। निरवधिकप्रवृत्तिमित्तवति यत्रार्थे यस्य शब्दस्य प्रयोगबाहुत्यमस्ति तस्य तत्र महायोगरूढिरिति यावत्। विष्णुनारायणा-दिशब्दाः परब्रह्मणि महायोगरूढाः। तदितरेषां इन्द्राग्न्यादिशब्दानां गच्छभुङ्क्ष्वदुःखिफट्प्रभृतीनां सर्वेषां महायोगः।।''

[४१]''**स्वकीयमेवमन्यानि पृथक् पृथक् अदात्प्रभुः।**
**नारायणादिनामानि ददौ नान्यस्य केशवः ।।**''ऐ.भा.द्वि.आ.अध्याय १

शब्दप्रभेदाः तत्समन्वयश्च सर्वमिदं मनसि निधाय ब्रह्मसूत्रप्रथमाध्याय प्रथमपादे अन्यत्रप्रसिद्धनामात्मकशब्दान्, द्वितीयपादे लिङ्गात्मकशब्दान्,

---

४०. प.स्व.वि. पृ. ८८-८९ ४१. उ.प्र.भा. पृ. १७७

तृतीयपादे उभयत्रप्रसिद्ध शब्दान्, चरमपादे अन्यत्रैव प्रसिद्धानां दुःखीबद्ध अवरादीन्प्रकृत्यादिस्त्रीलिङ्गवाचिनां समन्वयः कृतः। अस्य पट्टिका एतत्प्रकरणान्ते दत्ता। (पृ. १२३-१२६)

## २०. ऐतरेयोपनिषदि सर्वशब्दवाच्यत्वे केचन विशेषाः

(१) [४२]ऐतरेयोपनिषदि षष्टाध्याये रमादेवी स्वपतिं उपनिषत्प्रतिपाद्यं उपदेष्टारं महिदासं पप्रच्छ। **''कोयमात्मेति वयमुपास्महे''** कतरः स आत्मा इत्यादीन् प्रश्नान् ब्रह्मादिदेवानुग्रहार्थं स्वस्य विशेषज्ञानार्थं पप्रच्छ। तदा स्वयं रमामनोरमः महिदासः रमां स्ववल्लभां उवाच-

**''यद्, एतद्, हृदयं, मनः, च, आ, इतत्, संज्ञानं, आज्ञानं, विज्ञानं, प्रज्ञानं, मेधा, दृष्टिः, धृतिः, मतिः, मनीषा, जूतिः, स्मृतिः, सङ्कल्पः, क्रतुः, असुः, कामः, अवशः इति सर्वाण्येवैतानि प्रज्ञानस्य नामधेयानि भवन्ति।''**

[४३]एतानि त्रयोविंशतिनामानि भगवत्परतया भाष्ये व्याख्यातानि ऐतरेयसंहिताप्रमाणवचनेन।

(२) [४४]शतर्चिनः, मध्यमाः, गृत्स्नमदः, विश्वामित्रः वसिष्ठः इत्यादि-ऋषिवाचकशब्दाः भगवद्वाचकत्वेन व्याख्याताः एतरेयोपनिषदि। सकलसूक्तगतनामानि क्षुद्रसूक्ता महासूक्ता अपि भगवतः सूक्ष्मस्थूलरूपाण्याहुः सूक्ष्मस्थूलप्राणिस्थितत्वात् एवमेव सकलवेद-ऋचः सर्वेवेदा घोषा अपि प्राण एव इति ऐतरेयोपनिषत् घोषयति।

(३) समुद्रस्य हुङ्कारः हरेः सर्वाभिभवशक्तिं, मेघेषु स्थितः वायुः ओमिति

---

४२. उ.प्र.भा. पृ. २७४

४३. उ.प्र.भा. पृ. २७५-२७६

४४. उ.प्र.भा. पृ. १८२-१८९

स्वरते नित्यं, अनुदात्तस्वरं तु हरेः भेरीध्वनिना ज्ञायते, घण्टादीनां ध्वनिस्तु स्वरितात्मकः, उदात्तस्वरस्तु हरेः उच्चस्थितिं वदति इत्यादिविविधघोषैः हरेर्विविधोच्चगुणाः ध्वनिता व्यङ्ग्या भवन्ति।

(४) हरिः सर्वेभ्यो देवेभ्यो स्वकीयान्येव नामानि ददौ। वस्तुतस्तु तानि तस्यैव मुख्यनामानि। लोकव्यवहारार्थं इतरेषु तान्येव नामानि देवादिषु समाकृष्य प्रवर्तन्ते इति एतरेयसंहितावचनप्रमाणेन ज्ञायते। किंच सूक्ष्मप्रमेयमस्ति सर्ववेदप्रतिपाद्यत्वविषये। [४५]**''प्राणो ह्येष, य एष तपति''** इत्यत्र **''प्राणाद्वा एष उदेति प्राणेऽस्तमेति''** इत्यत्र प्राणशब्दः मुख्यतो विष्णौ प्रवर्तमानोऽपि वायावपि वर्तते। अतः सर्ववेदाद्यभिधेयत्वं वायोरप्यस्ति। प्राणस्य प्राण इति श्रुतेः उभयोरपि प्राणशब्दः एव। **''अयं वाव शिशुः योऽयं मध्यमः प्राणः''** इति वायोर्विशेषणात् उत्तमः प्राणो विष्णुरेव''।

अपि च[४६]

''अज्ञानाभिभवास्पृष्टौ वायुर्नारायणश्च तौ ।
सर्वशब्दोदितौ तस्मात् एतौ द्वावेव नापरः ।
अन्ये चैव मितैः शब्दैरुच्यन्ते नामितैः क्वचित्।
श्रीरप्यखिलशब्दोक्ता विष्णुवन्न तु मुख्यतः ।
तस्मादमितनामानावपि तौ मितनामवत्।
श्रीश्च वायुश्च विष्णुस्तु मुख्योक्तेरमिताभिदः।
अनन्तनामकत्वाच्च सोऽनन्तगुण ईरितः।
पृथक् नामानि यस्मात्तद्गुणानेव प्रचक्षते।'' **-इत्यादि ब्रह्माण्डे ॥**

एवं ब्रह्माण्डपुराणोक्त्या प्राणशब्दोदितौ विष्णुवायू। तौ सर्ववेदप्रतिपाद्यावपि तत्र निरवधिकशब्दवाच्यत्वं हरेरेव न तु

---

४५. उ.प्र.भा. पृ. १९०-१९१     ४६. उ.प्र.भा. पृ. १९१

वायोः। वायुः विष्णुपत्नी श्रीरपि अखिलशब्दवाच्यौ तथापि न मुख्यतः। तौ तु मितनामानौ। हरिस्तु अनन्तनामकत्वात् अनन्तगुणः अनन्तगुणवानिति कथितः इति अत्र सूक्ष्मांशः ज्ञातव्यः॥

(५) [४७]अपि च ऐतरेयोपनिषद्येव बृहतीसहस्रशंसनप्रसङ्गे **''प्राणः सर्वाणि भूतानि''** इत्युक्तम्। **''सर्वाणि''** इति भगवन्नाम **''यतो स पूर्णत्वात्** सर्वनामकः। सर्वाणि बहुरूपत्वात्''। तेन अनन्तरूपत्वात् पूर्णत्वात् ''सर्वाणि'' नाम तस्य कथितं उपनिषदि। ''भूतानि'' इत्यपि तस्य नाम, सर्वरूपेषु देशकालगुणतः पूर्णत्वात् सदा विद्यमानत्वात् अनन्तरूपवत्वाच्च। तदुक्तं भाष्ये

''......... पूर्णत्वात् सर्वनामकः।
सर्वाणि बहुरूपत्वात् सर्वरूपेषु पूर्तितः।
प्रभूतत्वात् भूतनामा सर्वरूपप्रभूततः।
बहुरूपः स भूतानीत्युक्तो विष्णुः सनातनः।'' इति ब्रह्माण्डे॥

[४८]तत्र ताम्रपर्णीव्याख्यानं

प्रभूतत्वात् पूर्णत्वात् भू बहौ इति धातोः। नित्याविर्भूतगुणत्वाद्वा। भवतेराविर्भावार्थत्वात्। प्रकर्षेण स्वातन्त्र्येण सत्त्वाद्वा भूतनामा। यतो बहूरूपेऽतः स भूतानीति बहुवचनेनोक्तः। सर्वभूतेषु प्रभूतत्वात् भूतानीति विशिष्टशब्देनोक्त इति योजना।

(६) [४९]तत्रैवोपनिषदि **''तदेतत् सहस्रं तत् सर्वं''** इत्युक्तं बृहतीसहस्र-महिमान्तरव्याख्यानरूपतया।

एतत् बृहतीसहस्रं विष्णुसहस्रनामव्याख्यारूपम् इति तस्यार्थः।

---

४७. उ.प्र.भा. पृ. १९१, १९२, १९४ ४८. ऐ.भा.ता.टि. पृ. ९८ (पत्रं. ४९)
४९. उ.प्र.भा. पृ. २२१-२२३

स्तोभसहस्रमनन्त एव। आपाततः सहस्रशब्दपरिमिततया दृश्यमानोऽपि अनन्तरूपप्रतिपाद्यशक्तिमत् बृहतीसहस्रम्। बृहतीसहस्रऋचः अनन्तरूपाणि व्याख्यास्यन्ति। तथापि प्रत्येकं ऋक् विष्णुसहस्रनाम्नः प्रत्येकं नाम वक्ति। अनन्तरूपचिन्तने केषाञ्चिदेव शक्तिमत्वात् इतराधिकारिसौकर्यार्थं विष्णुसहस्रनामस्तोत्रस्थप्रतिनाम्नः व्याख्यानपरमिदं योजितम्। यद्यपि विष्णुसहस्रनामापि अनन्तरूपाणि वक्ति, बृहतीसहस्रमपि तादृशमेव तथापि अनन्तनामवचनस्याशक्यत्वात् सहस्रमेवोक्तम्।

तदुक्तं भाष्ये (ऐ)

अनन्तरूपो हि हरिः शब्दोप्येषह्ययनन्तधा।

**''विष्णोः सहस्रनाम्नस्तु यत्तद्रूपसहस्रकम्।**
**बृहतीसहस्रमेतच्च तद्वक्ति हि पृथक् पृथक्।**
**सहस्रशब्दोऽप्यमितं यतो वक्त्यमितान्यतः।**
**नामानि विष्णोरुच्यन्ते सहस्रमिति चाख्यया।**
**अनन्तनामवचने त्वशक्तत्वात् सहस्रकम्।**
**विष्णोरनन्तरूपाणामुक्त्या पञ्चशतद्वये......''** इत्यादि च''

**''यावद्ब्रह्म विष्ठितं तावती वाक्''** इति वेदात् ब्रह्मणः यावन्ति रूपाणि सन्ति तावन्ति रूपाणि बृहतीसहस्रंप्रतिपादयति यतो विष्णुसहस्रं नामस्तोत्रव्याख्यानात् तस्य। बृहतीसहस्राणां प्रत्येकं ऋक् प्रत्येकनामार्थप्रतिपादकत्वात् बृहतीपठनेन विश्वादिसहस्ररूपस्तोत्रफलमश्नुते साधकः।

[५०]किं च बृहतीसहस्रस्य पञ्चभागाः साम्नः पञ्चभागाः आहत्य दश भगवद्रूपाणि मत्स्यादीनि अनन्तरूपात्मकान्यपि भवन्ति। यथा

---

५०. उ.प्र.भा. पृ. २२१, २२४

मत्स्यमत्स्यमत्स्यकूर्मः, मत्स्यवराहेत्यादयः, मत्स्यव्यासः मत्स्यहंसः इत्याद्यनन्ताश्च। किं च मत्स्यादिदशनामानि अनन्तरूपवाचकानि यतो दशनामान्येव अनन्तरूपलक्षणानि वक्तुं समर्थानि। तस्मादुक्तं

**''तत् सर्वं तानि दश''। तानि दशदशेति वै सर्वम्''**
**एतावती हि संख्या। दशदशतः तच्छतम्।**
**दशशतानि तत् सहस्रम्। तत् सर्वम्''** इत्युपनिषत्।

तद्भाष्ये च

**''दशैव मूलसंख्या च तद्विभेदाः शतादयः।**
**ऋक्सहस्रमिदं तस्मात् अनन्तगुणमच्युतम्।**
**अनन्तशक्तिममितरूपनामानमेव च।''**

[५१]अपि च श्रीमदैतरेयभाष्यं इदं स्पष्टतया प्रतिपादयति भगवान् रमापतिः न केवलं गायत्र्यादिछन्दःप्रतिपाद्यः किं तु बृहत्यादिछन्दःप्रतिपाद्यः सकलदेवनामवाच्यः सर्वऋषिनामवाच्यः स्तोमसामचित्यादिसर्ववस्तुनामवाच्यः, तस्मात् अनन्तगुणपूर्णः। अस्यां विद्यायां (अनन्तगुणपूर्णत्वोपासा) चतुर्मुख एव मुख्याधिकारी शिवादयस्तु एकदेशपरिज्ञानमात्र एवाधिकारिणः।

## २१. वायोश्च प्रतिमात्वम्

[५२]एवमुक्तरमापत्युपासने वायुरेव प्रतिमा - ब्रुहतीसहस्रं वायोः प्रतिमारूपं यत्र नारायणो ध्यायते।

## २२. अकारः नारायणवाचकः

[५३]यद्यपि सर्वेशब्दाः विष्णुवाचकाः तत्रापि विशेषतो अकारः नारायणवाचकः इति उपनिषद्वक्ति। **''अः इति ब्रह्म। तत्रागतमहमिति।''**

---

५१. उ.प्र.भा. पृ. २२२, २२४ ५२. उ.प्र.भा. पृ. २३०

विसर्गानन्तरं पुनः **''इ स्वरमस्ति।** अत्र अच् सन्धिना (स्वर) विसर्गलोपावकाशसद्भावेऽपि विसर्गः संहिततया उर्वरितः उपनिषदि छान्दसत्वात् न तत्र पाणिनिप्रवेशः। यत्र विसर्गः तथैवास्ति तत्र विशेषोस्ति इति भाति। तदुक्तं भाष्ये

**''इति शब्दोऽभिधानान्ते यत्र, वैशेषिकं हि तत्।**
**नामा स्यादिति मे साक्षान्निर्णयः समुदाहृतः॥'' इति**

शब्दनिर्णयमुदाहृतमाचार्यैः। तद्विशेषस्तु **''पारतन्त्र्याल्पगुणत्वादिसर्व-वस्तुस्वभावविरुद्धस्वभावं स्वतन्त्रं पूर्णगुणं सर्वजीवजडेभ्योन्यद् अज्ञानदुःखाल्पत्वपारतन्त्र्योत्पत्तिनाशादिसर्वदोषविवर्जितं ब्रह्मैव ''अ'' शब्दार्थः।** पूर्णं हि ब्रह्मशब्दास्यार्थः। न च दोषयुक्तस्य पूर्णता। न च जीवजडाद्यपूर्णवस्त्वभिन्नस्य पूर्णत्वं भवति। तस्मात् अकार शब्दार्थ एव ब्रह्मशब्दार्थः। तदेतदुक्तं ''अः इति ब्रह्म'' इति।

उपनिषत्सारभूता गीताऽपि तदेवोद्घोषयति **''अक्षराणामका-रोऽस्मि''**[५४] (१०-३३) इति। कृष्ण एव अकारवाच्यः स एव परंब्रह्म। तस्मात् अकारवाच्यवस्तु ब्रह्म अनन्तगुणपरिपूर्णम्।

[५५]उपनिषत्पुनर्वक्ति **''स वा एष वाचः परमो विकारो यदेतन्महदुक्थम्।''** इति।

अकाराद्धि सर्वाक्षराणि ओंकारसंभूतानि। तस्मात्सर्ववर्णात्मकवेदोऽपि अकारस्य विकार एव तस्मात् बृहतीसहस्रमपि अकारविकार एव यदुक्तं उपनिषदा। अकारबृहतीसहस्रयोः खलु व्याख्येयव्याख्यानभाव (मितामितस्वर-सत्यानृत पञ्चव्याख्यान) रूपं विकारं वक्ति उपनिषत् **'अकारो वै सर्वा वाक्'**। न तु परिणामित्वरूपम्।

---

५३. उ.प्र.भा. पृ. २४२, २४६, २४७ ५४. गी.भा. पृ. १७२

पूर्वोक्तार्थानुसारेण नारायणस्य सर्वदोषदूरत्वसर्वगुणपूर्णत्वरूपानन्त्यमेवाकारो वक्ति। तदुक्तं भाष्ये -

**''तस्मात् सर्वगुणान् विष्णोरकारो वक्ति यत्प्रभोः।**

**तद्व्यक्तयोऽपि शब्दा ये सर्वे विष्णुगुणब्रुवाः।**

**........................................**

**सर्वदोषविरुद्धोरुगुणपूर्णस्वरूपतः।**

**नारायण इति प्रोक्तो ह्यकारार्थोऽयमेवहि।**

**........................इत्यादि''** ब्रह्मसारे

एवमकारः सर्ववाग्विकारः सन् अनन्तगुणवाचकोऽपि श्रूयते ऐतरेयोपनिषदि। एतस्माद्विविच्य भगवानाचार्यसूर्यः एवमुद्गिरति।

## २३. ब्रह्मज्ञानिनः सर्वं भगवन्नामैव

[५६]**''तस्माद्विजानतः सर्वमपि भगवन्नामैव''** इति शास्त्रे तत्र तत्र भगवन्नामत्वेन प्रथितानि कतिचन विशिष्टाक्षराणि सन्ति, यद्यपि सर्वे वर्णाः तद्वाचकाः। तेषु

[५७]**''अ क य प्र वि सं भू म स ख हाः''** विष्णुवाचकाः।

- इति शब्दनिर्णये (बृ.उ.भा.अ. ५-७-३) अन्तर्यामीब्राह्मणम्)

एते वर्णा विष्णुमात्रवाचका इति भावः।

सर्वे अकाराद्येकपञ्चादशद्वर्णाः अपि आचार्यैः तन्त्रसारे उक्ताः। कथं ते अजादिभगवद्वाचका इति [५८(१)]वेदव्यासाचार्य - [५८(२)]वेंकटपत्याचार्यव्याख्याभ्यां निरुक्तिपूर्वकं ज्ञायते। यथोक्तम् :ह्ल

---

५५. उ.प्र.भा. पृ. २३०, २३२-२३४
५६. उ.प्र.भा. पृ. २३५
५७. उ.प्र.भा. पृ. ६५८
५८(१). तं.सं.छ. पृ. ३०१-३०३
५८(२). तं.सं.वें. पृ. १२-१५

अज इति। जनिरहितत्वादजः (वेंकटपत्याचार्यटीकयोद्धृतः)

न जायते इति अजः (श्री वेदव्यासाचार्यटीकयोद्धृतः)

## २४. विष्णुसहस्रनाम्नः प्रतिनाम्नोऽपि शतार्थवत्वम्

विष्णुसहस्रनाम्नः प्रतिनाम्नोऽपि शतार्थवत्वं आचार्यैः समयपुरःसरं प्रतिज्ञातमिति श्रीसुमध्वविजयेन ज्ञायते।((६)-४,५,६) तदा तत्सभाविद्वांसः पञ्चाशदर्थानपि न ज्ञातुमलं समर्था इत्यपि इतिहासः। एवं सहस्रनाम्नामर्थशतकमपि भगवत्परत्वेन ज्ञातुं सुयोग्याधिकारिभिः ऋजुभिरेव शक्यमिति एतरेयभाष्य उक्तम्।

## २५. लोकशब्दसमन्वयः कथम्

एवं सर्वस्यापि वैदिकवाङ्मयस्य भगवत्परव्याख्याने योगवृत्तिमवलम्ब्य (महायोगरूढिं महायोगं च) न काचनानुपपत्तिरिति इदानींतन प्रबन्धेन ज्ञायते। तर्हि लोकशब्दानां भगवत्परत्वमस्ति वा नवेति संशयो जायते। अत्र भगवत्पादवचनं तु एतरेयभाष्यान्ते एवमस्ति।

[५९]''**सर्वैश्च वैदिकपदैरपि लोकशब्दैः**
**मेघाग्निवारिधितलादिरवैश्च सर्वैः।**
**एकोऽभिधेय परिपूर्णगुणः प्रियोऽलं**
**नारायणो मम सदैव सुतुष्टिमेतु॥**'' इति।

अत्र ''**सर्वैश्च वैदिकपदैरपि लोकशब्दैः**'' इति शब्दानां केऽर्थाः इति जिज्ञासायां श्रीविश्वेश्वरतीर्था एवं व्याख्यास्यंति ''**वैदिकपदैः अग्न्यादिपदैः लौकिकपदैः कुड्यकुसूलादिशब्दैः**'' इति। तेन लौकिकपदस्य ''संस्कृतशब्दैः'' इति अर्थो ज्ञायते।

---

५९. ऐ.भा. पृ. २६९, २७४

[६०]ताम्रपर्णी श्रीनिवासाचार्यव्याख्याने तु **''वैदिकशब्दैः वेदादिगतै-रग्न्यादिशब्दैः लोकशब्दैः प्राकृतशब्दैः''** इति दृश्यते। तेन लोकशब्दस्य प्राकृतशब्दैरित्यनेन अपभ्रष्टभाषाशब्दैः अस्मदुच्चार्यमाणैः इति ज्ञायते। नात्र कश्चित्संशयो क्षुद्रोपद्रवो वा शक्यः ज्ञातुम्।

यद्यपि संस्कृतभाषा शब्दानां इव लोकभाषाशब्दानां यौगिकार्थमनुसृत्य भगवत्परत्वं ज्ञातुं वयं न प्रभवामः। न चाज्ञानमात्रेण भगवत्परत्वं त्यक्तुं उचितम्। नो चेत् अतिप्रसङ्गात्। यदा तिर्यग्योनिगतानां प्राणिध्वनीनां मेघाग्नि वारिधितलादिरवानां ध्वन्यात्कैरपि शब्दैः भगवान् नारायण एव अभिधीयते, मनुष्योच्चारितविविधदेशभाषाशब्दैः कुतो नाभिधीयते इति प्रश्नस्य समाधानं नास्तीति अर्वाचीनाः। यौगिकार्थज्ञानस्य उभयत्र साम्येऽपि मनुष्योच्चारितशब्दे कुतस्संश्यः । इति तेषां वादः।

[६१]श्रीपरिमळाचार्याः प्रातःसङ्कल्पगद्ये **''लौकिकवैदिकभेदाभिन्न-वर्णात्मकध्वन्यात्काशेषशब्दार्थ...........''** इति अवोचन्। अस्य गद्यस्य न किमपि प्राचीनव्याख्यानमुपलभ्यते। अर्वाचीनकन्नडानुवादाः सन्ति। तत्रैकस्मिन्ननुवादे **''लौकिक''** इति पदस्यैवं अनुवादः कृतः। तद्यथा

**''संस्कृतभाषेय विकारगळे आद कन्नड-हिन्दी-महाराष्ट्र-आङ्ग्ल-जर्मन्-रष्यन्-मोदलाद इतर भाषेगळू प्राकृतगळेनिसुत्तवे''।** तथा चात्र लौकिकशब्दो नाम प्राकृतभाषाशब्दः इति अर्थः कृतः यथा तामृपर्णीव्याख्याने।

**तथापि एतद्विषये चिन्ता संशोधनं च साधुरेव।**

## २६. हरेः सर्वशब्दवाच्यत्वे उपसंहारः

अयमत्र सारः। शब्दाश्च द्विविधाः। लौकिकाःवैदिकाश्च। सर्वेऽपि शब्दा

६०. ऐ.ता.टि. पृ. ४४१, ४४२ (१९०८ पत्रं २२१) ६१. प्रा.सं.ग. पृ. २

अर्थवन्तः। रूढ्यर्था कोशनिघण्टुभिर्लभ्यन्ते। योगार्थाः शब्दावयवर्थचिन्तया ज्ञायन्ते। द्वैतमते वैदिकशब्दाः त्र्यर्थसम्पन्नाः। प्रथमः तत्तद्देवतापरः द्वितीयोऽन्तर्यामिपरः तृतीयस्तु अध्यात्मपरः। तत्र प्रथमोऽर्थो रूढ्या द्वितीयः प्रमाणैः, तृतीयस्तु योगरूढिभ्यां लभ्यते। योगरूढिरपि महायोग महायोगरूढित्वेन द्विविधः। महायोगरूढिः विद्वत्प्रयोगबाहुल्येन, महायोगस्तु निरवधिकस्वातन्त्र्यं शब्दप्रवृत्तिहेतुमपेक्ष्य लभ्यते।

इदं सर्वं उद्धिश्य आचार्यैः ब्रह्मसूत्रभाष्ये प्रथमाध्याये चतुःप्रकारकशब्दानां समन्वयः कृतः। तत्रान्यत्रोभयत्रान्यत्रैवेति भेदेन कतिपयशब्दानां शब्दप्रवृत्तिनिमित्तान् दिग्दर्शयित्वा सप्रमाणं समन्विताः। एवमेव ऋग्भाष्ये गीता दशोपनिषत्सु - तत्र तत्र भागवते (एकादशस्कन्धे विशेषतः) सहस्रशो वैदिकलौकिकशब्दानां श्रीमदाचार्याः समन्वयं चक्रुः शब्दप्रवृत्तिनिमित्तं प्रदर्श्य। एतेषां प्रस्थानानामध्ययनेन श्रीमदाचार्याणां भक्तकारुण्यं भगवति तेषां सर्वशब्दवाच्यत्वेन सदागमैकविज्ञेयत्वस्य भगवद्गुणानन्त्यज्ञानविषये बद्धादरता च सम्यग्ज्ञायते। अहो श्रीमध्वस्य महती भक्तिः भगवति, तत्कारुण्यं चास्मासु !! अहो मङ्गलमस्माकं कृतवान् भारतीपतिः।

## २७. लौकिकशब्दानां हरौ समन्वयः कथम् ?

किं च लौकिकशब्दानां यद्यपि भगवत्परत्वं न ज्ञायते। तेषां प्राकृतत्वात् साङ्केतिकत्वात् योगार्थानुपलम्भात्, अस्मदादीनां अशक्तत्वेऽपि तत्तच्छब्दगतवर्णानां भगवत्परत्वानुसन्धाने, रूढ्यर्थानामपि भगवत्तन्त्रत्वात् भगवत्तन्त्रानुसन्धानेन तत्परत्वसमन्वयानुसन्धाने वा न काप्यनुपपत्तिः। योगार्थानुसन्धाने अनधिकारिणामस्माकं तन्न दोषाय।

तस्मात् समस्तलौकिकवैदिकशब्दवाच्यो हरिरेव। सर्वेऽपि शब्दाः कांश्चन गुणान् अभिदधत्येव। तेन अनन्तशब्दैः अनन्तगुणोपपत्तेः अनन्तगुणोपासना यथाशक्ति यथाधिकारं सर्वैरपि कार्यमेव इति सिद्धम्।

## ३.३.२८ विष्णौ ब्रह्मसूत्रभाष्यसमन्वयाध्यायकृत-सर्वशब्दसमन्वयत्वप्रकारः[६२]

**प्रथमः पादः**

**अन्यत्रप्रसिद्धनामात्मकशब्दसमन्वयात्मकः**

| समन्वितशब्द साधारणधर्माः | अधिकरणम् | समन्वितशब्दः |
|---|---|---|
| १) गुणगुणि वाचकाः (?) | ६) आनन्दमयाधिकरणम् | आनन्द, आनन्दमयः प्राणमयः, मनोमयः, विज्ञानमयः, अन्नमयः |
| २) अधिदैवगताः | ७) अन्तस्तद्धर्माधिकरणम् | इन्द्र-अग्नि-इत्यादयः |
| ३) आधिभौतिकाः | ८) आकाशाधिकरणम् | आकाश-पृथिवीत्यादयः। |
| ४) आध्यात्मिकाः | ९) प्राणाधिकरणम् | प्राणः, अपानः इत्यादयः। |
| ५) सूक्तगताः | १०) ज्योतिरधिकरणम् | ज्योति, वाजपेय, उक्थः इत्यादयः। |
| ६) वेदगताः | ११) गायत्र्याधिकरणम् | गायत्री, त्रिष्टुप् इत्यादयः |
| ७) अन्यप्रापक-बहुलिङ्गयुताः | १२) अन्तिमप्राणाधिकरणम् | प्राणः, चक्षुः श्रोत्रादीनि इन्द्रियाणि |

६२. त.प्र.भा. (१)

**द्वितीयः पादः**

## अन्यत्रप्रसिद्धलिङ्गात्मकशब्दसमन्वयात्मकः

| समन्वितशब्द-साधारणधर्माः | | अधिकरणम् | | समन्तितशब्दः |
|---|---|---|---|---|
| १. | सर्वगतत्वम् | १. | सर्वगतत्वाधिकरणम् | आदित्यः |
| २. | अत्तृत्वं (सर्वसंहारकर्तृत्वं) | २. | अत्तृत्वाधिकरणम् | अदितिः |
| ३. | कर्मफलभोगरूप-क्रियालिङ्गम् | ३. | गुहाधिकरणम् | |
| ४. | चक्षुरन्तस्थितिरूप-भावयुक्त रमणरूप क्रियालिङ्गम् | ४. | अन्तराधिकरणम् | |
| ५. | स्थितिरूपभावलिङ्गं नियमनाख्यक्रिया लिङ्गम् | ५. | अन्तर्याम्यधिकरणम् | |
| ६. | अदृश्यत्वादिलिङ्गम् | ६. | अदृश्यत्वाधिकरणम् | |
| ७. | पाचकत्वाद्यनेक लिङ्गम् | ७. | वैश्वानराधिकरणम् | वैश्वानरः |

**तृतीयः पादः**

**तत्रचान्यत्र सिद्धनामलिङ्गात्मकशब्दसमन्वयात्मकः**

| समन्तिवशब्द साधारणधर्माः | अधिकरणम् | समन्वित शब्दः |
|---|---|---|
| १. द्युभ्वाद्ययनत्वं | १. द्युभ्वाद्यायतनत्वम् | |
| २. पूर्णत्वं | २. भूमाधिकरणम् | भूमन् |
| ३. अम्बरान्तधारणं सूर्यचन्द्रादिप्रशासनम् | ३. अक्षराधिकरणम् | अक्षरम् |
| ४. ईक्षणस्वरूपत्वं तत्कर्मत्वं च | ४. सदधिकरणम् | सन्नाम |
| ५. हृत्पद्मस्थत्वलिङ्गम् | ५. दहराधिकरणम् | |
| ६. आनुकूल्येन गृह्यमाणत्वलिङ्गम् | ६. अनुकृत्यधिकरणम् | |
| ७. प्राणादिव्यवस्थापकत्व-रूपनिरवकाशत्वलिङ्गम् | ७. वामनाधिकरणम् | ईशानः |
| ८. जगच्चेष्टकत्वलिङ्गम् | १०. कम्पनाधिकरणम् | वज्रः |
| ९. उभयलोकसञ्चरणलिङ्गम् | ११. ज्योतिरधिकरणम् | ज्योतिः |
| १०. प्राकृतनामरूपराहित्यम् | १२. आकाशाधिकरणम् | आकाशः |
| ११. स्वप्नादिद्रष्टृत्वलिङ्गम् (सर्वज्ञत्वं-असंगत्वं) | १३. सुषुप्त्युत्क्रान्त्यधि करणम् | ह्लह्न |
| १२. सर्वाधिपत्यं लिङ्गम् | १४. पत्यधिकरणम् | ब्राह्मणनाम |

**यतुर्थः पादः - अन्यत्रैवप्रसिद्धोभयविधशब्दसमन्वयात्मकः**

| **समन्तितशब्द साधारणधर्माः** | **अधिकरणम्** | **समन्वितशब्दः** |
|---|---|---|
| १. स्वातन्त्र्यं तद्गतत्वं लिङ्गम् | १. आनुमानिकाधि-करणम् | अव्यक्तं-सूक्ष्मम् ऐश्वर्यविरोधि अवरत्व- दुःखित्व-बद्धत्वार्थकशब्दाः |
| २. कर्माभिधायकशब्द-वाच्यत्वाद्युक्तम् | २. ज्योतिरुपक्रमाधि-करणम् | मध्वादिज्योतिष्टोमादि सर्वकर्मवाचकशब्दाः |
| ३. आधाराधेयत्वादि लिङ्गम् | ३. न संख्योपसंग्रहा-द्यधिकरणम् | पञ्चजनादि शब्दाः। बहुत्ववाचिशब्दाः |
| ४. उत्पत्तिमत्वलिङ्गं-अवान्तरकारणत्वम् | ४. कारणत्वेनेत्यधि-करणम् | आकाशादिशब्दाः |
| ५. अन्यत्रैवप्रसिद्ध सर्वशब्दत्वं | ५. समाकर्षाधिकरणम् | |
| ६. स्त्रीलिङ्गत्वम् | ६. प्रकृत्यधिकरणम् | प्रकृतिः,लक्ष्मीत्यादयः |
| ७. निषेधमुखवेद्यत्वं (त.प्र.) (स्त्रीनिषेधि नामिनां) (भादी) | ७. एतेन व्याख्याताधि-करणम् | शून्यं, असत्, तुच्छ, अभाव नाश-इत्यादयः |

**वि.सू. :** केषुचिदधिकरणेषु सामान्यतः लिङ्गमेव प्रदर्शितम्। तल्लिङ्गनिमित्तं समन्वेतव्या शब्दाः कण्ठतो नोक्ताः। तस्मिन्नवसरे क्वचित् वाक्यसमन्वयः क्वचिच्च प्रकरणसमन्वयः टीकादिभिः (तत्त्वप्रकाशिकाभावदीपादिभिः) अवगन्तव्यः।

## ३.४ ब्रह्मणो निर्गुणत्वनिरासः अनन्तगुणत्वसमर्थनं च

### ३.४.१ कर्मनिर्णयोक्तदिशा

पूर्वप्रकरणे ब्रह्मणः सर्वशब्दसमन्वयेन तस्यानन्तगुणपूर्णत्वं प्रतिपादितम्। अत्र केचित् ब्रह्मणः गुणपूर्णत्वं नाङ्गीकुर्वन्ति ''केवलो निर्गुणंश्च'' इत्यादिश्रुतिप्रमाणैः। तस्मात् यावत् पर्यन्तं निर्गुणत्वं न निराक्रियते तावत् पर्यन्तं हरेः सगुणत्वं अनन्तगुणवत्वं नैव सिध्यति। तदर्थं आचार्यैः कर्मनिर्णयादिषु ब्रह्मणो सगुणत्वं अनन्तगुणवत्वं प्रतिपादितम्। तदस्मिन् प्रकरणे प्रतिपाद्यते संक्षेपेण श्रुतिस्मृतियुक्तिभिश्च।

[१]ऋग्वेदब्राह्मणेषु महानाम्नीनामको भागः सुप्रथितः। तत्र महानाम्नी-शब्दवाच्यत्वं कुत इति चिन्तायां भगवत्पादैरुक्तं कर्मनिर्णये (खण्डार्थनिर्णये)[२]

**''महन्नाम यासु ऋक्षु विद्यते ता महानाम्न्यः। परस्य ब्रह्मणो यन्नामेन्द्रादिकं तन्महार्थत्वात् महत्। महद्धि तत्परं ब्रह्म, अशेषगुणपूर्तेः''** इति ।

विष्णोरेव कुतः महच्छब्दवाच्यत्वं इति प्रश्नस्य तत्रैव आचार्यैः उत्तरं दत्तं **''महद्धि तत्परं ब्रह्म अशेषगुणपूर्तेः''** इति ।

### १. विष्णोः गुणपूर्णत्वे प्रमाणानि

विष्णोर्गुणपूर्णत्वप्रतिपादनाय श्रुतियुक्तिरूपप्रमाणं उदाहृतम्। तदेतत् सङ्गृह्यते साररूपतया।

यद्यपि योगिप्रत्यक्षरूपं महतां प्रत्यक्षमत्र प्रमाणपदवीमारोहति

---

१. क.नि.टी.टी. पृ. १-११४

२. क.नि.टी.टी. पृ. १-११४

गुणपूर्णत्वविषये। तथापि श्रुतेरेव बलीयस्त्वात् श्रुत्यादिनैव प्रतिपादनीय इति मनसि निधाय श्रुतियुक्ती व्याहरंति श्रीमदानन्दतीर्थाः अशेषगुणपूर्तेरिति ।

सुमध्वविजयेऽपि तदुक्तम् ।

[३]''**नारायणोऽनन्तगुणो ब्रह्माख्यो वेदवेदितः।**

**विश्वकर्तेति** विश्वज्ञः **श्रुत्या युक्त्या**ऽप्यसीषधत्''।। १५-८

**श्रुत्युदाहरणम्**

[४]''**सत्यं ज्ञानमनन्तं ब्रह्म**'' । तै.उ.ब्रा. २-१

[५]''**विज्ञानमानन्दं ब्रह्म**'' । बृ.उ. ५-९-२८

[६]''**यः सर्वज्ञः सर्ववित् यस्य ज्ञानमयं तप** मुं.उ. १-९

[७]''**दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः** आ.उ. (१)-२-२

[८]एतावानस्य महिमा अतो ज्यायांश्च पूरुषः । ऋ. १०-९०-३ (पु.सू.)

[९]''**यो नः पिता जनिता यो विधाता धामानि वेद भुवनानि विश्वा**''

इत्यादयः विज्ञाननन्दाद्यनेकगुणान् प्रतिपादयन्ति।

''सत्यं ज्ञानमनन्तं ब्रह्म'', ''एतावानस्य महिमा, [१०]पूर्णमदः पूर्णमिदं, सर्वकर्मा, [११]सर्वकामः, [१२]विष्णोर्नुकं, [१३]परोमात्रया, [१४]न ते विष्णो जायमानो न जातो - इत्यादयस्तु गुणपूर्णत्वस्य अभिधात्र्यः श्रुतयः ।

---

३. म.वि. (२) पृ. ३४५-४००
४. उ.सं. पृ. २५
५. उ.प्र.भा. पृ. ६७१
६. उ.सं. पृ. १६
७. उ.प्र.भा. पृ. ७७
८. ऋ.सं. पृ. ७०६
९. ऋ.सं. पृ. ६९५
१०. उ.प्र.भा. पृ. ७३८
११. उ.प्र.भा. पृ. ४०१
१२. ऋ.सं. पृ. ११७
१३. ऋ.सं. पृ. ४५६
१४. ऋ.सं. पृ. ४५६

तत्र ''सत्यं ज्ञानं अनन्तम्'' इति श्रुतौ अनन्तशब्देन गुणानन्त्यमभिधीयते तैत्तिरियश्रुतौ ।

''**एतावानस्य**'' इति श्रुतौ किं अस्य महिमा एतावान्? इति प्रश्नपूर्वकं, ''**अतो ज्यायांश्च पूरुषः**'' इति समाधानवाक्येन, न केवलं एतावानेव किं तु पूर्णत्वादेव पुरुषनामा एषः, अतोऽपि ज्यायान् पूर्ण इति यावत्, इति गुणपूर्त्यभिधानात्। ''**पूर्णमदः पूर्णमिदं**'' इति शुक्लयजुर्वेदमन्त्रेण पूर्णत्वमेव उद्घोषितम्। ''**सर्वकर्मा, सर्वकामः**'' इत्यत्रापि पूर्णत्ववाचिना सर्वशब्देन निरवकाशार्थेन गुणपूर्णोक्तिः अनायासेनैव ज्ञायते ।

यथा पृथ्वीधूलीगणनं कथंचित् शक्यमपि भगवन्माहात्म्यं नैव गण्यं अनन्तत्वात् इति कथयन्ती ''**विष्णोर्नुक**'' मिति श्रुतिः तस्य पूर्णत्वमेव वक्ति। एवमेव खलु विष्णुसूक्तगा मन्त्राः तस्यापरिमितमाहात्म्यं अन्यैरप्याप्यत्वं च प्रतिपादयन्तः गुणपूर्णत्वमेव प्रतिपादयन्ति ।

''**विष्णोर्नु कं वीर्याणि प्र वोचं यः पार्थिवानि विममे रजांसि।**
**यो अस्कभायदुत्तर सदस्थं विचक्रमाणस्त्रेधोरुगायः ॥**''

-विष्णुसूक्तं - ऋ. (१)-१५४-१

''**परो मात्रया तन्वा वृधान न ते महित्वमन्वश्नुवन्ति।**''

ऋ. (७)-९९-१

तथैव सर्वा अपि श्रुतयः विष्णोः परब्रह्मत्वं पूर्णगुणत्वं दोषदूरत्वं प्रतिपादयन्ति ।

## २. युक्त्युदाहरणम्

युक्तिरपि ब्रह्मणो निर्गुणत्वे बाधिका न तु साधिका। तदुक्तमाचार्यैः कर्मनिर्णये युक्तिश्चेति। तद्यथा ''**बुद्धिपूर्वं सर्वकर्तृत्वात् सर्वज्ञत्वादयो गुणा युक्ताः**''

‘‘**कर्तृत्वात् सगुणं ब्रह्म पुरुषं पुरुषर्षभम्।**’’ - इति च भागवते ।

ततश्चायमर्थः। ब्रह्मणः सगुणत्वसाधने ‘‘**क्षित्यादिकं सकर्तृकं कार्यत्वात् घटवत्**’’ इति अनुमानमप्यस्ति। तत्रेयमाशंका समुन्मिषति। नन्वनया युक्त्या क्षित्यादेः सकर्तृकत्वमात्रं सिध्यति। न तु ब्रह्मणः सगुणत्वमिति। तस्मादुक्तमाचार्यैः ‘‘**बुद्धिपूर्वमिति**’’। यथा युक्त्या सर्वस्य जगतः कर्ता सिद्धःतयैव युक्त्या ब्रह्मणो सर्वज्ञत्वादयोऽपि सिद्धा भवन्ति। सर्वकर्तृत्वांतर्गतत्वात् तेषाम्। बुद्धिपूर्विका हि कर्तृता नाम ।

क्षित्यंकुरादिकं कर्तृजन्यं कार्यत्वात्। घटवत् इत्यनुमानस्य प्रमाणत्वात् (ईश्वरस्य सद्भावे) तर्कसङ्ग्रहोक्तरीत्या।

## ३. सर्वकर्तृत्वे श्रुतिरूपप्रमाणम्

अत्रायमभिसन्धिः। सर्वकर्ता तावत् युक्तिसिद्धः। तस्य चैकत्वं लाघवात् उपादेयमेव। अनेकत्वं प्रमाणसापेक्षम्। तत्र मानाभावात्। एकत्वे तु बहुप्रमाणोपालम्भाच्च। तद्यथा।

‘‘**एको दाधार भुवनानि विश्वा**’’ इति श्रुतेः स चैकः ब्रह्मैव। अस्मदादिषु असंभवात् अदृष्टेः ।

‘‘**यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति**’’ इत्यादि श्रुतेः[१५] । -तै.उ.भृ. ३-१

‘‘**कर्तृत्वं नाम कार्यकारकक्रियाफलाभिज्ञानतदिच्छाप्रयत्नपूर्वकः स्पन्दः**’’ (टीकाकृदुक्तिः) ।

तदुक्तं तर्कशास्त्रेऽपि ।

---

१५. उ.सं.तै. पृ. २८

१६. उ.श्वे. पृ. १४०

**'उपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमत्वं कर्तृत्वं।''** इति। इत्थं च भगवान् सर्वकर्ता इत्युक्ते सर्वज्ञः सर्वकामः सत्यसङ्कल्पः समस्तशक्तिसमन्वित एव अभिहितो भवति ।

तस्मादुक्तं भागवते -

**''कर्तृत्वात् सगुणं ब्रह्म पुरुषं पुरुषर्षभ''**। इति

तस्मात् ब्रह्म सगुणमेव ।

**''केवलो निर्गुणश्च''**[१८] इत्यादिश्रुतिविरोधस्तु निर्गुणत्वभङ्गप्रकरणे विवेच-यिष्यते ।

## ४. ब्रह्मगुणमिथ्यात्वे दोषाः

यच्चोच्यते सगुणमपि ब्रह्म, गुणास्तु मिथ्या इति सोऽयं पक्षः व्याहत्याद्यनेकदोषदुष्टत्वात् नादर्तुं शक्य इत्यादयो विशेषाः कर्मनिर्णये आचार्यैः बहुधा प्रपञ्चिताः ॥ तद्यथा

(१) सत्वादिगुणाभावोक्तेश्च ।

(२) अन्यथैको देवः सर्वभूतेषु गूढः इत्यादीनामपि गुणत्वात् स्वोक्तिविरोधः ।

(३) न च निर्विशेषं नाम किञ्चिदस्ति। निर्विशेषत्वोक्तेरेव व्याहतत्वात् ।

(४) न च निर्विशेषत्वे किं चिन्मानम्। अशेषविशेषवचनानुभवयुक्ति-विरोधश्च। (इत्यादयः)

**अतोऽनन्तगुणो भगवान्नारायण इति सिद्धम्।**

## ३.४.२ न्यायामृतरीत्या ब्रह्मणो निर्गुणत्वभंङ्गः ॥

### १. पीठिका

श्रीव्यासतीर्थैः स्वीयन्यायामृते अद्वैतमतस्य प्रायः सर्वा अपि प्रक्रियाः अनूद्य निराकृताः। टीकाकृतः ग्रन्थोपरि तत्कालीनाद्वैतमतानुगैः ये ये आक्षेपाः प्राप्ता तान् सर्वान् सर्वमूलटीकाः अनुसृत्य तदभिप्रायान् सर्वान् श्रीश्यासतीर्थाः समर्थितवन्तः। न्यायामृतस्य महतीं अद्वैतिनोऽपि प्रशंसन्ति यतः श्रीव्यासतीर्थाः तत्र प्राक्तनसर्वानिपि अद्वैतग्रन्थान् यथावत् अनूद्य विमर्शितवन्तः।

श्रीव्यासतीर्थैः अत्र निर्गुणत्वभङ्गं श्रुतिस्मृतियुक्तिभिः व्याकरणपूर्व-मीमांसावेदान्तादि संवादेन कृतम्। तदत्र संक्षिप्ततया अनूद्यते सगुणप्रतिपादनार्थं ब्रह्मणः।

ब्रह्मणो गुणपूर्णतां अनन्तशब्दः वक्ति। यथोक्तम्[१]

**''योऽनन्तशक्तिर्भगवाननन्तो महद्गुणत्वात् यमनन्तमाहुः''॥**

-भागवते (१)-१८-१९

तदसहमानाः नैयायिकाः मायावादिनश्च ईश्वरं अल्पगुणकं निर्गुणमिति वदन्ति। तेषां निरासपर्यन्तं ईश्वरस्य गुणपूर्णत्वं नैव सिध्यति। किं तु तत् अजागलस्तनायितं भवति ।

तथा च ब्रह्मणो अनन्तगुणत्वसिद्धये आपाततो निर्गुणत्वसाधिकाश्रुतयः स्मृतयश्च तत्संवादीनि च अनुमानानि आरम्भ एव विमृश्यन्ते ।

गुणविरोधिनः परमस्य विष्णोः कुतो गुणाभावं वदन्ति? साधकाभावाद्वा उत बाधकसद्भावाद्वा? न तावत्प्रथमः श्रुतिसद्भावात्। यथोक्तम् ।

---

१. भा. पृ. ४४

## २. ब्रह्मशब्दार्थ एव गुणपूर्णता

ब्रह्मशब्दार्थ उक्तः श्रुतौ तद्यधा

**''अथ कस्मादुच्यते ब्रह्मेति बृहन्तो ह्यस्मिन् गुणा इति''**॥ इति श्रुतेः[२]

## ३. गुणगणनमशक्यम्

**''ब्रह्मेशानादिभिर्देवैः समेतैर्यद्गुणांशकः ।**
**नावसावयितुं शक्यो व्याचक्षाणैश्च सर्वदा''**॥

भागवततात्पर्योदाहृत (४-१५-३६)स्कान्द वचनम्[३]

## ४. गुणवत्वे सूत्रप्रामाण्यम्

[४]**''अदृश्यत्वादिगुणको धर्मोक्तेः''** ब्र.सू. (१)-२-६-२१

[५]**''सर्वधर्मोपपत्तेश्च''** ब्र.सू. (२)-१-११-३८

इत्यादीनां निर्णायकसूत्राणां बाहुल्येनोपलम्भात्। ब्रह्मशब्दनिर्वचनं कुर्वत्या श्रुत्या ब्रह्मणि अविद्यमानगुणा एव प्रतिपाद्यन्ते इति तेषां मतं। न च तन्मात्रेण तासां श्रुतीनां निर्गुणत्वबाधकत्वं वक्तुमुचितम्। कुत एवमुच्यते।

## ५. गुणाः स्वाभाविकाः

उक्तभगवद्गुणानां स्वाभाविकत्वोक्तेः श्वेताश्वतरश्रुतौ। तद्यथा ।

[६]**''परास्य शक्तिः विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च''**। इति।

---

२. श्रुतिः
३. सं.ग्रं. पृ. ६१
४. ब्र.सू.भा. पृ. ४१
५. ब्र.सू.भा. पृ. ९८
६. उ.सं. पृ. १४०

इतरत्रापि

**''सत्यकामः सत्यसङ्कल्पः''** इत्यादिषु श्रुतिषु[७]

[८]**''स्वलक्षणैर्लक्षितभावविग्रहम्''** इत्यादिभागवतादिस्मृतिषु च तद्गुणानां स्वाभाविकत्वोक्तेः ।

किं च ब्रह्मणो गुणानां, गुणिनो ब्रह्मणश्च ऐक्यमेव श्रूयते

[९]**''नेह नानास्ति किञ्चनैत्यादि''** श्रुतिषु। का.उ. २-१

ततश्च तद्गुणानां मिथ्यात्वे गुणिनो ब्रह्मणश्च मिथ्यात्वं निर्गुणवादिनां दुर्वारमेव ।

[१०]अतः **''नित्यो नित्यानां चेतनश्चेतनानां''** का.उ. २-२

इत्युक्तस्य ब्रह्मणः सत्यत्वपरिरक्षायै तद्भिन्नानां तद्विशेषाणां च सत्यत्वमङ्गीकार्यम् ।

## ६. ब्रह्मणो गुणवत्वे अनुमानानि

किं च अनुमानान्यपि सगुणत्वश्रुतिमुपस्कुर्वन्ति ।

**''ब्रह्म धर्मिसत्तासमानसत्ताकधर्मवत्*..पदार्थत्वात् घटवत्।''**[११] इति न्याः ।

किं च प्रमेयत्वाभिधेयत्वादिरूपाणां केवलान्वयिधर्माणां स्ववृत्तित्वं

---

७. उ.प्र.भा. पृ. ५०८ — ८. भा

९. उ.प. पृ. ८ — १०. उ.प. पृ. ९

* एतादृशानि सप्तानुमानानि भगवति स्वाभाविकगुणानुमापकानि श्रीव्यासतीर्थैः न्यायामृते उदाहृतानि। तानि परिशिष्टे-११ (पृ. २४८-२४९) उट्टंकितानि।

११. न्या. (३) पृ. १५०

अन्योन्यवृत्तित्वं अनिच्छद्भिः मायावादिभिरपि अङ्गीकृतमेव। इत्थं च सर्वत्रापि प्रमेयत्वादिरूपा धर्माः प्रमेयत्वादिष्वपि प्रमेयत्वादिरूपा एव भावात्मका धर्मा संत्येवेति नाद्यहेतोः व्यभिचारशङ्कापि ।

ननु यदुक्तं **''बृहन्तो ह्यस्मिन् गुणा''** इत्यादयः श्रुतयः ब्रह्मणि निर्गुणत्वबाधिका भवन्तीति तन्न विचाररमणीयम्। तथाहि। पूर्वोक्ताः सर्वश्रुतयः, ब्रह्मद्विविधम् सगुणं निर्गुणं चेति प्रतिपादयन्ति पूर्वोक्ता सगुणत्वबोधिकाः सर्वा श्रुतयः स्मृतयः सगुणब्रह्मपराः ।

सगुणं च ब्रह्म विशिष्टरूपत्वात् मिथ्यैव। शुद्धं च ब्रह्म न श्रुतिप्रतिपाद्यम्। (१) [१२]**''यतो वाचो निवर्तन्ते अप्राप्य मनसा सह'' (तै.ब्र. ९)** [१३]**''अशब्दमस्पर्शम्'' (का.उ. १-३-१५)** इत्याद्यासु श्रुतिषु तस्य सर्वथा वाचामगोचरत्वोक्तेः। तथा च ब्रह्मणि गुणवत्वप्रतिपादकानां सहस्राधिकानां वेदवाक्यानां सत्वेऽपि नैतानि वाक्यानि नैर्गुण्यं प्रति बाधकानि भवन्ति इति चेत् नैतदपि सुन्दरम्। भवेदेतदेवं यदि सगुणातिरिक्तं निर्गुणं ब्रह्म श्रुतयः प्रतिपादयेयुः। न चैतदस्ति। यदा श्रुतिरेव सगुणं ब्रह्म वक्ति तदा बहूनां सगुणवाक्यानां विरोधे निर्गुणत्वबोधिका अल्पीयसी श्रुतिः निर्गुणबोधने कथं वा प्रभवेत्। निर्गुणश्रुतीनां अल्पीयस्त्वात् बहुश्रुतीनां सगुणपरत्वात्। न हि बहुश्रुतिविरोधे अल्पश्रुतीनां तात्विकत्वकल्पनं युज्यते। बहुबाध्यस्य अन्याय्यत्वात् ।

तस्मात् आपाततो निर्गुणत्वबोधकानां श्रुतीनां सगुणपरतयैव व्याख्यानमवश्यमङ्गीकार्यं भवेत्। तथा च परमप्रमाणैः वेदैः सगुणब्रह्मैव सिध्यति इति तद्बाधः निर्गुणत्ववादस्य ।

ब्रह्मपारस्तोत्रे [१४]**''परः पराणां''** (वि.पु.१-१५-५४-५९) इत्यादि यत्

---

१२. उ.प. पृ. २७ १३. उ.प. पृ. ८

१४. वि.पु. पृ. ८७-८८ (१९७०, सं. २०२६)

श्रूयते तदपि सगुणब्रह्मपरैव न तु तदतिरिक्तं निर्गुणब्रह्मपरं यत्पराभिप्रेतम्। तस्मात् नाङ्गीकारार्हस्तद्वादः।

## ७. निर्गुणवाक्यसमन्वयप्रकारः

वेदेषु तत्र तत्र क्वचित् सगुणनिर्गुणोभयवाक्यानां उपलब्धिमात्रेण (दर्शन-मात्रेण) एकस्मिन्नेव ब्रह्मणि भेदाङ्गीकारे अनिष्टसरणीः आपद्यन्ते। तथा हि।

"**सदेव सोम्य इदमग्र आसीत्**" तथा (छां.उ. ६-२-१)

"**असद्वा इदमग्र आसीत्**" इति (छां.उ. ६-२-१)

सदसदुभयश्रुती अपि परापरब्रह्मविषये स्याताम्।

एवमेव पूर्वमीमांसाशास्त्रेऽपि दृश्यन्ते एव निदर्शनानि। यथोक्तम्।

[१६]"**अतिरात्रे षोडशिनं गृह्णाति**" तथा [१७]"**नातिरात्रे षोडशिनं गृह्णाति**" (मीमांशापरिभाषोदाहृत) इति ग्रहणाग्रहणश्रुती अपि परापरयागविषये स्याताम्। न हि तत्र सर्वत्र यागादिषु तादृशभेदः कल्प्यते। किं तु अधिकारभेदोद्देशभेदादिना व्यवस्था कल्प्या। एवमेव अत्रापि निर्गुणश्रुतेः अर्थान्तरं परिकल्प्य एकस्मिन्नेव ब्रह्मणि गुणपूर्णे सगुणनिर्गुणाभिधात्र्यः श्रुतयः योज्याः। (सगुणं नाम अप्राकृतगुणवत्वं निर्गुणं नाम प्राकृतगुणवर्जितत्वमिति।)

ननु सगुणनिर्गुणभेदेन ब्रह्मद्वयं नास्माभिरङ्गीक्रियते। किं तु [१८]"**एकमेवाद्वितीयं ब्रह्म**" (छां. ६-२-१) इदानीं सगुणं ब्रह्म देशान्तरे कालान्तरे तु तिर्गुणं इति चेत् तदपि नातिसुन्दरम्। तथाङ्गीकारेऽपि गुणानित्यत्वे पर्यवस्यति न तु मिथ्यात्वे। वस्तुतः ब्रह्मगुणानामनित्यत्वं आगमविरुद्धं, [१९]"**ज्ञानं नित्यं क्रिया नित्या**" (पैङ्गी श्रुतिः) [२०]"**एष नित्यो महिमा**

---

१५. उ.सं. पृ. ६६

१६. न्यायामृतोदाहृत श्रुतिः (पूर्वमीमांसोक्त)

१७. मी.प.पृ. १७०-१७१

१८. उं.सं. पृ. ६६

१९. ब्र.सू.भा. पृ. ३२४, ३२५ (अ. (१) १-२-९)

२०. उ.सं. पृ. ११९

**ब्राह्मणस्य''** (बृ. ६-६-२३) इत्यादि श्रुतेः।। **''एष नित्यः .........''** इति श्रुतिस्तु ब्रह्मपरैव। एतेनैव गुणानां औपाधिकत्ववादोऽपि निरस्तो भवति। अपि च उक्तनित्यत्वसत्यत्वश्रुतीनां **''स्वाभाविकी ज्ञानबलक्रिया च''** इत्यादीनां च श्रुतीनां विरोधस्य जागरुकत्वात्।

ननु श्रुत्युक्ता गुणा अतात्त्विका एव श्रुत्या गुणमात्रोक्त्या तात्त्विकत्त्वानुक्तेः इत्यपि न। **''स्वाभाविकी''** [२१]**''सत्यः सो अस्य महिमा''** इत्यादिश्रुतिभ्यः तात्त्विकत्वसिद्धेः।

अपि च प्रामाण्यस्वतस्त्वं उभाभ्यां तत्त्ववादिमायावादिभ्यां अङ्गीकृतः पन्थाः। विषयाबाधत्वमेव प्रामाण्यं नाम। इत्थं च विषयाबाधकत्वलक्षणस्य स्वभावनियतत्वात् (औत्सर्गिकत्वात्) श्रुत्या गुणमात्रोक्तावपि (तत्सत्यत्वस्यानुक्तावपि) श्रुतिप्रतिपाद्यनां गुणानां विषयाबाधरूपसत्यत्वं स्वत एव सेत्स्यति। अन्यथा [२२]**''सत्यं ज्ञानं अनन्तं ब्रह्म''** (तै. उ.२-१) इति श्रुत्युक्तं ब्रह्मसत्यत्वं, [२३]**''तत्वमसि''**(छां. ६-८-१६) इत्यत्रोक्तं ऐक्यमपि सत्यं न स्यात्। तत्रापि भवन्मते श्रुत्युक्तसत्यत्वस्य ऐक्यस्य च सत्यत्वोक्त्यभावात्। नन्वथापि ब्रह्मणः सगुणत्वस्य निर्गुणश्रुतिविरोधनिमित्तात् अतात्विकविषयता अङ्गीकार्या एव इति चेत् तदपि विचारपदवीं नारोहति। न हि परस्परश्रुतिविरोधे सति एकस्याः अप्रामाण्यं वक्तुमुचितम्।

## ८. शास्त्रवाक्ययोर्विरोधे समन्वयप्रकारः

उक्तं च ह्न

**''कोहि मीमांसको ब्रूयात् विरोधे शास्त्रयोर्मिथः।**
**एकं प्रमाणमितरत् त्वप्रमाणं भवेदिति।''** इति।

---

२१. श्रुतिः
२२. उ.सं.तै. पृ. २५
२३. उ.सं.छां. पृ. ६८-७१

इदमत्राकूतम् । वेदानां प्रामाण्यं तावत् अपौरुषेयत्वेन इति अविप्रतिपन्नम् । एवं प्रमाणत्वेन निश्चितयोः वेदवाक्ययोः परस्परविरोधे (आपाततः) दृश्यमाने एकं प्रमाणं इतरदप्रमाणमिति वदन् मीमांसकः भवितुं नार्हति। भवन्मते सगुणबोधकवाक्यानां आरोपितगुणबोधकत्वस्वीकारे अर्थतः अप्रामाण्यमेव स्वीकृतं स्यात्। तत्तु अनुपपन्नम्। वस्तुतः मीमांसकाः परस्परवाक्ययोर्विरोधे दृश्यमाने एकस्यार्थसङ्कोचमेव विधत्ते न तु आरोपितविषयत्वम्। किञ्चान्यत्रापि [२५]''**प्रकृतिवत् विकृतिः कर्तव्या**'' इति चोदकेन प्राजापत्यहोमे चरुधर्माणां सर्वेषां प्राप्तत्वेऽपि कृष्णयागे (कृष्णलादौ) अवघातवर्जं प्रकृतिवत् कुर्यादिति अर्थसङ्कोच एव कृतः न तु बाधः ।

[२६]एवमेव ''**मा हिंस्यात् सर्वा भूतानि**'' इति श्रुतेः [२७]''**अग्निषोमीयं पशुमालभेत**'' इति वाक्येन विरोधे प्राप्ते वैधीहिंसाव्यतिरिक्तहिंसायाः पापसाधनत्वं इत्येवं रूपेणैव अर्थसङ्कोच एव अङ्गीकृतः न तु आरोपितविषयत्वम् ।

एवं व्याकरणशास्त्रेऽपि [२८]''**परनित्यान्तरङ्गापवादानां उत्तरोत्तरं बलीयः**'' इति नियमानुसारेण उत्तरसूत्रेण पूर्वसूत्रस्य, नित्येनानित्यस्य, अन्तरङ्गेण बहिरङ्गस्य, अपवादेनोत्सर्गस्य च योऽयं बाधः उक्तः (विरोधः) सोऽपि सङ्कोच एव ।

धर्मशास्त्रेऽपि [२९]''**सौलभ्ये श्रवणादीनामन्यत् सङ्कोचमर्हति**'' यो.दी. ३-८७ इत्यत्र सन्ध्यादिकर्मानुष्ठानस्य वेदादिशास्त्रश्रवणस्य च युगपत्प्राप्तौ श्रवणविधौ प्राबल्यात् नित्यकर्मानुष्ठानस्य बाधो नाम सङ्कोच एवेति प्रतिपादितम् ।

ब्रह्ममीमांसायामपि [३०]''**विकारशब्दान्नेति चेन्न प्राचुर्यात्**''

---

२४. न्या. (३) पृ. १५१

२५. न्यायामृतोदाहृतश्रुतिः

२६. न्यायामृतोदाहृतश्रुतिः

२७. न्यायामृतोदाहृतश्रुतिः

२८. सि.कौ. (१) पृ. ५२ पा. १-३-१ (परिभाषाप्रकरणे)

२९. यो.दी. पृ. २४

३०. ब्र.सू.भा. पृ. १९

**(ब्र.सु. १-१-६-१३)** इति **शास्त्रयोः** परस्परविरोधे प्राप्ते सति अर्थान्तरमेवोक्तं न तु आरोपितम् ।

तस्मात् दार्शनिकसम्प्रदाय एव तादृशः यत् परस्परप्रमाणत्वेन प्रतिपन्न-शास्त्रयोर्विरोधे अर्थसङ्कोचादिकमेव कार्यं न तु अन्यतरस्याप्रामाण्यमिति । अतः वेदे दृश्यमानसगुणनिर्गुणवाक्ययोः विरोधे सगुणवाक्यस्यारोपितगुणबोधकत्वरूपं अप्रामाण्यं नैव वक्तव्यम् । गुणनिषेधकस्य निर्गुणवाक्यस्य निषेधकत्वात् परत्वाच्च प्राबल्यमित्यपि न साधु । परत्वनिषेधत्वयोः प्राबल्यव्यभिचारित्वत्त् ।

[३१]''**सृढ, मृद इत्यादिसूत्रं**'' (पा.सु. १-२-७) परमपि निषेधकमपि [३२]''**नक्त्वा सेट्**'' (पा.सु. १-२-१८) इति सूत्रं बाधते इत्यत्र न कापि विप्रतिपत्तिः ।

किं बहुना परैरभिहिते [३२]''**केवलो निर्गुणश्च**'' (श्वे. ६-११) इति श्रुतावपि ''**साक्षी चेता**'' इत्यादिना साक्षाद्द्रष्टुत्वादिगुणाभिधानात् न तेन निषेधः कर्तुं शक्यः ।

**[३३]किं च उपासनायाः कार्यत्वे निष्णोरात्मत्व एव च ।**
**उभयत्रापि तात्पर्यमात्मोपासादिके विधौ ॥**

इति स्मृतेः सगुणवाक्यानां तात्पर्यं तु उपासनायां तथा विष्णुगुणपूर्णत्वेऽपि इति विज्ञायते ।

[३४]''**योमामशेषदोषोज्झं गुणसर्वस्वबृंहितम्।**
**जानात्यस्मै प्रसन्नोऽहं दद्यां मुक्तिं न चान्यथा**''-न्यायामृतोदाहृतश्रुतिः
(अनुव्याख्यानन्यायविवरणे (३)-२-८ उदाहृतम्)

इत्यादि न केवलं तात्पर्यं सगुणत्वस्य उपासनायां किं तु असदुपासनायाः विप्रतिषिद्धत्वात् वेदेषु । तदुक्तम् -

---

३१. पा.सू. पृ. ५,६      ३२. उ.सं. पृ. १४०
३३. न्या. (३) पृ. १५३      ३४. न्या. (३) पृ. १५६ /ब्र.सू.भा. पृ. ४३३

[३५]‘‘**नाविद्यमानं बृवते वेदा ध्यातुं न वैदिकाः**’’ ।

न्यायामृतोदाहृतस्मृतिः

[३६]‘‘**न च रमन्त्यहो असदुपासनयात्महनः।**’’ भा. (१०)-९४-२४ इत्यादिस्मृतयः । तथैव

[३७]‘‘**अचेतनऽसत्यायोग्यान्यनुपास्यफलत्वविपर्ययाभ्यां**’’ इति न्याया-मृतोदाहृत साङ्कर्षणसूत्रेण च तन्निषेधात्। तस्मात् गुणपूर्णत्वसाधकाभावात् निर्गुणत्वं अङ्गीकार्यमिति आद्यः पक्षः न साधुः ।

नापि बाधकसद्भावात् सगुणत्वभङ्गः । निर्गुणवाक्यानां अर्थान्तरपरत्वात् । मिथ्यात्वश्रुतेश्च प्रत्यक्षबाधस्वव्याधातग्रस्तत्वात्। अतः एकस्मिन्नेव वस्तुनि (ब्रह्मणि) सगुणत्वनिर्गुणत्वविरोधेन (असम्भवात्) समुच्चयायोगात् अनुष्ठाने इव च वस्तुनि विकल्पासंभवात्। एकवाक्येन अन्यवाक्यस्य आपाततार्थत्यागरूपः बाधः अवश्यं वक्तव्यः । स च बाधः सगुणवाक्येन निर्गुणवाक्यस्यैव युक्तः न तु प्रबलस्य सगुणवाक्यस्य निर्गुणवाक्येन ।

किं च न्यायामृते सगुणश्रुतेरेव प्राबल्यं विशेषविषयत्वादिभिः प्रतिपादितम् ।

[३८]‘‘**उपक्रमादिन्यायेन श्रुतिलिङ्गनयात्तथा।**
**विशेषसामान्यनयान्न्यायान्निरवकाशतः।**
**बाहुल्यन्यायतश्चोपजीवत्वन्यायतस्तथा।**
**पशुच्छागनयाच्चैव सविशेषनयात्तथा।**
**उपांशुव्याजन्यायेन युक्तायुक्तनयात्तथा।**
**आदृतत्वात्सूत्रकृता प्रबला सगुणश्रुतिः।।**’’

---

३५. न्या. (३) पृ. १५७  ३६. भा. पृ. ७५२

३७. न्या. (३) पृ. १५७  ३८. न्या. (३) पृ. १५९

तस्मात् यथा "**मा हिंस्यात् सर्वा भूतानि**" इत्यादिरूपा हिंसावाक्यं अग्निषोमीयेतर (वैधीहिंसेतर) हिंसानिषेधकं तथा निर्गुणवाक्यमपि श्रुतिसिद्धसर्वज्ञत्वसर्वशक्त्यादीतरतर्काभासादिप्राप्तहेयविषयसुखादिगुणानां निषेधकं इति अवश्यं अङ्गीकार्यत्वात् न तद्बाधकं सगुणश्रुतेः। तस्मात् ब्रह्म सगुणमेव।

## ९. ब्रह्मणो निर्गुणत्वे प्रमाणविचारः (न्यायामृतरीत्या)

ब्रह्मणो सगुणत्वं तदनिच्छद्भिरपि नैर्गुण्यवादिभिः अवश्यमङ्गीकार्यमेव निर्गुणत्वविषये प्रमाणाभावात्। तथा हि। किं निर्गुणं ब्रह्म स्वतः सिद्धम्? आहो प्रत्यक्षानुमानागमैर्वा सिद्धम् ? न तावदाद्यम् शास्त्रवैयर्थ्यात्। किं च यदि ब्रह्मनिर्गुणत्वं स्वतः सिद्धं तर्हि कथं तद्विषये विप्रतिपत्तिरुदियात्? विप्रतिपत्तिदर्शनात् स्वतः सिद्धत्वं न वक्तव्यम्। एवं स्थितेऽपि यदि स्वतः सिद्धत्वमुच्यते तर्हि यद्यत् विप्रतिपन्नं तत्सर्वमपि स्वतः सिद्धमिति युक्तं स्यात्। न च निर्गुणत्वस्य स्वतः सिद्धत्वेऽपि अज्ञाननिवृत्यर्थत्वात् शास्त्रस्य न वैयर्थ्यप्रसङ्ग इति वाक्यम्। एवं हि वदतः स्वतः सिद्धिकाले एव अज्ञानमप्यस्तीति अङ्गीकृतं भवति । न च तद्युक्तं। स्वतः सिद्धेः अप्रामाणिक्याः उररीकारे घटादावपि तादृशी स्वतः सिद्धिरेव अङ्गीकर्तव्या स्यात्। एवं च निर्गुणत्वं न स्वतः सिद्धम्।

न च निर्गुणत्वे प्रत्यक्षं प्रमाणपदवीमारोहति। अपसिद्धान्तात्।

[१]"**नेन्द्रियाणि नानुमानं वेदा ह्येवैनं वेदयन्ति। तस्मादाहुर्वेदा**" (पिप्पलादश्रुतिः) इत्यादि श्रुतिसिद्धत्वात्। प्रत्यक्षेणैव यदि सिध्येत् तर्हि शास्त्रादिवैयर्थ्यस्य निराकर्तुमशक्यत्वात्। अत एव च नानुमानम्।

---

१. व्या.ग्रं. पृ. ६९ (विष्णुतत्त्वनिर्णयोदाहृत पिप्पलादश्रुतिः)
न्या. (३) पृ. २०२

किं च अनुमानं वा शब्दो वा न निर्गुणत्वावेदने प्रभवति। अनुमानस्य व्यापकतावच्छेदकविशिष्टबोधकत्वनियमात्। शब्दस्य च शक्यतावच्छेदक-विशिष्टबोधकत्वनियमात्।

किं च शब्दाः अभिधावृत्या निर्गुणबोधका न, येन तेषां शक्यतावच्छेदक-विशिष्टबोधकत्वं स्यात्। किं तु गौण्या लक्षणया वा निगुणत्वबोधकत्वमेव इति चेन्न। गौण्याः मुख्यार्थगुणयुक्ततया एव बोधकत्वस्य **''सिंहो माणवकः''** इत्यादिषु दर्शनात्। लक्षणाया अपि शक्यार्थसम्बन्धितावच्छेदकधर्मवत्तया एव स्वार्थबोधकत्वस्य **''गङ्गायां घोषः''** इत्यादौ दृष्टत्वात्। निर्धर्मकबोधे प्रमाणाभावात्।

तथा च प्रत्यक्षानुमानागमाख्यसर्वप्रमाणानां निर्विशेषबोधने सामर्थ्याभावात् निर्गुणे प्रमाणाभावः अविप्रतिपन्न एव। (सुस्थ एव) मानाधीना मेयसिद्धिः किल।

॥ तस्मात् सगुणमेव ब्रह्म इत्यङ्गीकार्यम् ॥

## ३.४.३ युक्तिमल्लिकोक्त अनन्तश्रुत्यर्थः

### १. पीठिका

श्रीव्यासतीर्थसमकालीनैः श्रीवादिराजतीर्थैः स्वकीययुक्तिमल्लिकायां प्रायः सर्वाः अपि अद्वैतप्रक्रियाः निपुणतरं निराकृताः। सुन्दरबन्धुरपद्यैः रसिकाह्लादकरैः काव्यरसमयैः पद्यैः विशेषतः यमकालङ्कारबद्धैः वेदान्तप्रमेय प्रतिपादनं कृतं। युक्तिमल्लिकागतभेदगुणसौरभयोः ब्रह्मणः निर्गुणत्वनिराकरणं अनन्तगुणसमर्थनं अनन्तश्रुत्यर्थं सर्ववस्त्वात्मकत्वे युक्तिबाधाश्च व्याकरण-

श्रुतिस्मृतियुक्त्यादिभिः निपुणतरं प्रतिपादितम्। एता एव अस्मिन् प्रकरणे संक्षेपेण प्रदर्शिताः।।

कृष्णयजुर्वेदतैत्तिरीयारण्यके ब्रह्मवल्यां [1]**''ब्रह्मविदाऽऽप्नोति परं। ..... सत्यं ज्ञानमनन्तं ब्रह्म। यो वेद निहितं गुहायां परमे व्योमन्। सोऽश्नुते सर्वान् कामान् सह। ब्रह्मणा विपश्चितेति''**। इति द्वितीयमन्त्रः पठितः। (तै.उ. २.२)

## २. सर्ववस्त्वात्मकत्वाङ्गीकारे व्याहत्यादिदोषाः

अत्रत्यानन्तशब्दस्य देशतो कालतो भिन्नत्वेन व्याप्तिमत्वं ब्रह्मणोऽगीकुर्वाणा अपि अद्वैतिनः वस्तुतः आनन्त्यं तु सर्ववस्त्वात्मकत्वं ब्रुवन्ति। तदेतत् विप्रतिपत्तिविषयत्वात् अप्रामाणिकत्वात् प्रमाणविरुद्धत्वात् द्वैतिनः नांगीकुर्वन्ति। तदुक्तं युक्तिमल्लिकायां - तद्यथा

[2]**सर्ववस्त्वात्मकत्वं च यदनन्तत्वमीरितम्।**
**तदयुक्ततमं मन्ये युक्तायुक्तविचारणे ।। यु.म.भे.सौ. १**

**समस्तवस्तुरूपत्वं न तावत्स्वस्य शोभते।**
**जडानृतविरोधित्वं यद्ब्रह्मणि जगौ स्वयम्।। यु.म.भे.सौ. २**

अतः पूर्वं अद्वैताचार्यैः स्वयमेव मुरारिशतके ब्रह्मणो लक्षणमुक्तम् - तद्यथा

**''अनृतजडविरोधिरूपमन्तत्रयमलबन्धदुःखताविरुद्धं**
**अतिनिकटमविक्रियं मुरारेः परमं पदं प्रणयादभिष्टवीमि''**इति।

अनेन ब्रह्मणः अनृतविरोधित्वं नाम सत्यत्वं, जडविरोधिता नाम ज्ञानत्वं,

---

१. उ.सं. पृ. २५ २. यु.म.भे. पृ. १, २

अन्तत्रयमलबन्धदु:खताविरुद्धत्वेन आनन्दत्वापरपर्यायानन्तत्वं लक्ष्यते तन्मते। परं तु तैरेव सर्ववस्त्वात्मकोक्तेः तस्यैव ब्रह्मणः जडत्वाङ्गीकारे स्वमतविरोधः आक्षिप्यते। ब्रह्मणो ज्ञानत्वांगीकारेण वस्तूनां जडत्वांगीकारेण जडात्मकत्वं ब्रह्मणो पुनर्वचनं स्ववचनविरोधे पर्यवस्यति।

अपि च देशकालावपि जडभूते-वस्तुनी। तस्मात्तयोः देशकालयोः ब्रह्मणः एकस्वरूपता स्वमतविरोध एव।

घटपटादीनां तु अनित्यत्वात् ब्रह्मणः नित्यत्वात् कथं तयोः पुनः अभेदोक्तिः सर्ववस्त्वात्मकत्वाङ्गीकारस्य । तथा सति ब्रह्मणोऽपि अनित्यत्वापत्तेः। सोऽपि स्वमतविरोध एव। देशकालयोः ब्रह्मणः सकाशात् भेदं वदन्ती श्रुतिः तस्यैवाभेदं कथं प्रतिवदति। न हि श्रुतिर्द्विजिह्वा।[३]

## ३. देशकालगुणवस्त्वनन्तानां अर्थाः

[४]देशकालव्याप्तिर्नाम देशकालयोः वर्तमानत्वं (वर्तनं) खलु परसम्मतार्थः। तत्कथं वस्तुव्याप्तिविषये वस्तुवर्तमानत्वं विहाय वस्त्वात्मकत्वं परैरङ्गीक्रियते। अङ्गीक्रियते चेत् स्वव्याहतिस्तैराश्लिष्येत।

अनन्तशब्दार्थः आलोचनीयः[५]। बहुवस्त्वाश्रयत्वमेव गुणतोऽऽनन्त्यं नाम। यथा रत्नाकरो समुद्रो नाम रत्नत अनन्त एव। तथा गुणतो अनन्तो नाम गुणतो पूर्ण एव। अन्तशब्दस्य अपूर्णत्वाभिधानात् ।

तथैव सर्वत्र सर्वदा वर्तनमेव अनन्तो नाम। तस्मात् देशकालगुणानन्त्येषु अर्थभेदो नास्त्येव। अस्ति चेत् पावनपङ्क्तिभेदप्राप्तेः ।

यद्यपि ब्रह्मणो वस्तुतो अनन्तता नाङ्गीकारक्षमा यथा परो वक्ति। वस्तूनां

---

३. यु.म.भे. पृ. ५

४. यु.म.भे. पृ. ४

५. यु.म.भे. पृ. ७

अल्पगुणकत्वान् ब्रह्मणो पूर्णगुणत्वात्। अत एव भागवताचार्यैरुक्तं [६]**''महद्गुणत्वात् यमनन्तमाहुः''** इति । (भा. १-१८-१९)

अथापि शास्त्रे यत्र यत्र वस्त्वात्मकत्वं ब्रह्मणो उच्यते तत्तु सर्ववस्तुस्वामिता सर्ववस्तुषु स्थितिर्वेति अधिगन्तव्यं न तु ब्रह्मणो वस्तुभिः स्वरूपतः अभिन्नता। एवं परोक्तिः प्रमाणविरोधे पर्यवस्यति ।

किं च **''सत्यं ज्ञानमनन्तं ब्रह्म''** इत्यत्र श्रुतौ सत्यशब्देन अन्नमयप्राणमयौ उद्दिष्टौ, ज्ञानशब्देन मनोमयविज्ञानमयौ अभिप्रेतौ, अनन्तशब्देन तु आनन्दमयाख्यं तदेव ब्रह्म विवक्षितम् ।

## ४. अनन्तश्रुतेः श्रुत्यैवार्थः

अन्तरहितः खलु अनन्तः। अन्तो नाम अवधिः। अनन्तो नाम निरवधिः अवधिरहितो वा। कस्मिन् विषये तदिति (अवधिरहितः) जिज्ञासायां आनन्दविषये इत्येव निर्धारणयोग्यार्थः)।

[७]**''सत्यो ज्ञानः परमानन्दरूपः आत्मेत्येवं नित्यदोपासनं स्यात् ।''** इति कमठश्रुतिः - ब्र.सू. भ्ष्योदाहृता (३)-३-४२-६८ इति श्रुत्यन्तरसंवादात्। न केवलं आनन्दमयः (आनन्दपूर्णः) किं तु उपलक्षणतया अजहल्लक्षणया च व्याप्यत्वसर्वशक्यत्वदयालुत्वादिगुणैः अनन्त इत्यपि श्रुत्यर्थो भवति ।

तस्मादनन्तश्रुत्यर्थो देशकालगुणानन्त्य एव, न तु देशकालवस्त्वात्मकत्व-मिति ।

---

६. भा. पृ. ४४

७. ब्र.सू.भा. पृ. २१९

## ३.४.४ युक्तिमल्लिकायां निर्गुणश्रुत्यर्थः

श्रीवादिराजमुनीन्द्रः स्वरचितयुक्तिमल्लिकायां गुणसौरभे प्रथमं वेदापौरुषेयत्वं प्रतिपाद्य, तदनङ्गीकुर्वतोः चार्वाकजैनयोः मतं निराकृत्य, वेदादिप्रामाण्यमङ्गीकृत्यापि तत्त्वावेदकत्वातत्त्वावदेकत्वेन तद्वैविध्यं च प्रतिपादयदद्वैतं निराकुर्वन्, नारायणस्यैव सकलवेदप्रतिपाद्यत्वं गुणपूर्णत्वं च प्रतिपादयति ।

## १. तत्त्वावेदकत्वातत्त्वावेदकत्त्वविभागनिराकरणम्

सर्वे वेदास्तावत्प्रमाणं अपौरुषेयत्वात् इति सर्वैरङ्गीकार्यम्। तथापि जीवेश्वरभेदप्रतिपादकानामतत्त्वावेदकत्त्वं अभेदप्रतिपादकानां तत्त्वावेदकत्वमिति विभागकल्पने प्रमाणभावात् नाङ्गीकारार्हम्। [१]यतः वेदाः सर्वेऽपि अपौरुषेयत्वेन दोषशङ्कानवकाशात् प्रमाणान्येव (पुंदोषमूलदोषस्याभावात्) ।

## २. शास्त्रवाक्येषु विरोधपरिहारक्रमः

यद्यपि सर्वे वेदाः प्रमाणं तथापि तेषु परस्परं विरोधे सति कथं परिहारः इति प्रश्नो जायते। यथा [२]‘‘**द्वासुपर्णा**’’ [३]‘‘**तत्त्वमसि**’’ इत्यादिषु जीवब्रह्मणोर्मध्ये भेदाभेदरूप विरोधो आपाततः दृश्यते। तत्र [४]‘‘**वेदवेदानुसारेषु विरोधेऽन्यार्थकल्पना**’’ इति ।व्यासस्मृतिः।

निरवकाशवाक्यानुसारेण सावकाशवाक्यानां सादृश्याद्यर्थान्तरवर्णनेन विरोधपरिहारः करणीयः। वेदाः गा इव मान्याः पूज्याश्च । न हि ताः शिक्षार्हाः। तस्मात् यथा गवोर्मध्ये विरोधे प्राप्ते सति तृणपिण्याकदानेन गावौ प्रत्येकीकृत्य कलहः परिह्रियते तथैव श्रुत्योर्मध्ये विरोधे प्राप्ते निरवकाशवाक्यानुसारेण सावकाशवाक्यार्थं कुर्वन्ति प्राज्ञाः। विपरीतेन तु

---

१. यु.म.भे. (१) पृ. ३०७ (गुणसौरभम्)    २. उ.सं. पृ. १८ (मुं. उप.)

३. उ.सं. पृ. ६८-७१ (छां.उप.)    ४. सं.ग्र. पृ. ५३

म्लेञ्छा गामेकां हत्वा अन्यां समादधति। तथैव एकस्याः श्रुतेः अतत्वावेदकथनं तद्धननमेव, अन्ततो वेदैकदेशस्य अप्रामाण्यप्रसक्त्या प्राणसमप्रामाण्यत्याजने पर्यवस्यति वेदैकदेशतत्वावेदकत्वकथनेऽपि ।

[५]किंच **''एष सर्वेश्वरः''** [६]**''यः सर्वज्ञः सर्ववित्''** इति श्रुतेः [७]**''केवलो निर्गुणश्च''** इति श्रुतेश्च विरोधः कथं परिह्रियते इति चेत्। उच्यते ।

**[८]तृणपिण्याकदानेन कृत्वाऽर्थान्तरलालसाम्।**
**ततः प्रच्यावयदेकां कृद्धाऽप्यन्याध्वना व्रजेत्।। यु.म.गु.सौ ५२१**

**अतत्वावेदिका त्वेका तत्वस्यावेदिका परा।**
**इत्याद्युक्तिस्त्वमानत्वप्राप्त्याऽसुत्याजनं श्रुतेः।।**

**यु.म.गु.सौ ५२३, (३१३)**

**''एष सर्वेश्वरः''** इत्यादयः निरवकाशश्रुतयः, **''केवलो निर्गुणश्च''** (श्वे.उ. अ. ६-११) इति तु सावकाशश्रुतिः। निर्गुणश्रुतिस्तु सामान्यतो वचनं तस्मात् सावकाशः। सर्वेश्वरत्वसर्वज्ञत्वादिश्रुतिस्तु निरवकाशश्रुतिं न प्रतिषेधति। यथा सर्वज्ञत्वसर्वेश्वरत्वादयः गुणत्वेन व्यवह्रियन्ते तथा रागद्वेषदुःखबन्धनसत्वादयः प्राकृतरूपादयश्च सर्वे लौकिकगुणा अपि गुणशब्देनोच्यन्ते। तस्मात् निर्गुणशब्देन प्राकृतगुणविरहत्वं वक्तुं शक्यते ब्रह्मणि। निरवकाशसर्वेश्वरत्वादिकं गुणं हातुं न शक्यते तस्मात् सावकाशन्यायेन केवलो निर्गुणो नाम प्राकृतगुणविरही भगवान् इति व्याख्यातुं शक्यते ।

अयमेव न्यायः परैरप्यंगीकृतः। तद्यथा। [९]**''मा हिंस्यात् सर्वा भूतानि''** इति श्रुतौ हिंसायाः सामान्यनिषेध उक्तः। किंतु सर्वैरपि वैदिकैरत्र **''वैधीहिंसां**

---

५. उ.सं. पृ. २० (मां.उप.)
६. उ.सं. पृ. १६ (मु.उप.)
७. उ.सं. पृ. १४० (श्वे.उप.)
८. यु. (१) पृ. ३१२, ३१३ (गुणसौरभम्)
९. यु. (१) पृ. ३१८ (गु.सौ.)

**विना''** इति अपवादो दर्शितः। तथा च यागीयहिंसायाः श्रुत्यंगीकारात् तां विहाय अन्यहिंसा न कार्या इत्येव अस्याः श्रुतेरर्थः अभ्युपगम्यः ।

[१०]सामान्यनिषेधस्यैकदेशे संकुचितत्वात्।

एवमेव निर्गुणश्रुतिरपि व्याख्येया- ''**प्राकृतगुणवर्जितत्वमेव निर्गुणशब्दार्थ''** इति। यथा गुणशब्दः प्राकृताप्राकृतगुणवाची तथा हिंसापि वैदिक्यवैदिकीति प्रसिद्धा। तस्मात् ''**एष सर्वश्वर''** इत्यादि विशिष्य गुणविधायकवाक्यान्निर्गुण इति सामान्यतो गुणनिषेधकनिर्गुणवाक्यमेव दुर्बलमिति'' सिद्धम्। एतद्विषये **पाद्मपुराणवचनं** प्रमाणत्वेन उदाहरति ग्रन्थकारः।

## ३. निर्गुणशब्दार्थे पुराणसम्मतिः

[१०]''**योऽसौ निर्गुण इत्युक्तः शास्त्रेषु जगदीश्वरः।**

युु.म.गु.सौ. ५३१ पृ. ३१९

**प्राकृतैर्हेयसंयुक्तै गुणैर्हीनत्वमुच्यते।।''** पद्मपुराणं

न हि विवेकिनः योग्यार्थलब्धावपि अयोग्यार्थं मृगयन्ति। दुग्धार्थी बुद्धिमान् गामेव दोग्धि न तु बस्तगलस्तनम्।

## ४. ब्रह्मणि सगुणनिर्गुणभेदनिराकरणम्

अद्वैतमतरीत्या यत् सगुणनिर्गुणब्रह्मद्वयमुक्तं न तत् शास्त्रसिद्धम्। किं तु ब्रह्म एकमेव तत्तु नारायणः सकलकल्याणगुणाकरः नैव निर्गुणः यत्पराभिप्रेतः। अत्र युक्तिं प्रदर्शयति ग्रन्थकृत्। अनुमानप्रकारस्तु।

[११]''**विमतो नारायणः परब्रह्म भवितुमर्हति सृष्टिशून्यत्वात् नाशरहितत्वात् व्यतिरेकेण घटवत्''** इति ।

---

१०. यु. (१) पृ. ३१८, ३१९ (गु.सौ.)     ११. यु. (१) पृ. ३२३ (गु.सौ.)

[१२]**"अहमेवासमग्रे च नान्यत् सदसत्परं"** भागवते (२-९-३२)

**"परं ब्रह्म परं धाम पवित्रं परमं भवान्"** (गीता. अ.१०-१२)

[१३]**"एकीभूय युनः शेते निर्दोषो हरिरादिकृत्"**

इत्यादीन्यत्र प्रमाणानि। एतेन नारायणस्यैव परब्रह्मतायाः, गुणपूर्णत्वस्य च सिद्धौ सत्यां पुनस्तस्यैव निर्गुणोक्तिस्तु, व्याहतभाषित्वं सूचयति। तस्मात् अत्रोदाहृतानि प्रमाणानि नारायणस्यैव सगुणत्वं गुणपूर्वत्वं वदन्ति निर्गुणप्रणाडिकां निराकुर्वन्ति च ।

न च तन्मात्रेण ब्रह्मगुणानन्त्यं कथं सिध्यतीति वाच्यम्। प्रश्नमिमं श्रुतिरेव परिहरति। तद्यथा ।

[१४]**"न ते विष्णो जायमानो न जातो देव महिम्नः परमन्तमाप"** इति श्रुतेः [१५]**"भगवद्गुणानां अन्तराहित्यलक्षणनित्यत्वापरिमितत्वयोः सिद्धिः"** उक्तं भवति। [१६]**"सत्यः सो अस्य सहिमा गृणे शवो यज्ञेषु विप्रराज्ये"** इति श्रुत्या **"स जगत्सृष्ट्यादिलक्षणो अस्य परमेश्वरस्य महिमा सत्यः तं विप्रप्रधानेषु यज्ञेषु शवः सुखमुद्दिश्य स्तौमि"** इति उक्तेः [१७]महिम्नः पारमार्थिकसत्यत्वं उक्तं भवति। तेन सहसा ब्रह्मणः निर्गुणत्वं परास्तं, त्रिगुणशून्यत्वात् निर्गुणः विष्णुरेवेत्यपि सिद्धम् ।

[१८]फलितार्थस्तु। निमित्तत्रयात् - (१) गुणपूर्णत्वात् (२) क्षराक्षराभ्यामुत्तमत्वात् (३) प्राकृतगुणराहित्यात् अयं नारायणः एव परं ब्रह्म इति । (गु.सौ. ५७३)

---

१२. भा. पृ. ७२ १३. यु. (१) पृ. ३२४ (सत्यप्रमोदटीकायां) (गु.सौ.)
१४. ऋ.सं. पृ. ४५६ १५. यु. (१) पृ. ३३९ (गु.सौ.)
१६,१७. यु. (१) पृ. ३३९ (गु.सौ.) १८. यु. (१) पृ. ३४० (गु.सौ.)

[१९]अपि च ब्रह्मगुणानां नित्यत्वेनापि मिथ्यात्वाभावात् निर्गुणावसर एव नास्तीत्यपि ज्ञायते । (गु.सौ. ५७४)

## ५. अनिर्गुण इति पदच्छेदोऽपि साधुः

पूर्वं ''केवलो निर्गुणश्चे''त्यत्र निर्गुण इति पदच्छेदमङ्गीकृत्य परदूषणमभिहितम्। अधुना ''केवलोऽनिर्गुणश्च''[२०] इत्यपि पदच्छेदः कर्तुं शक्य इति तद्विवृतम्।

**एवं च नञा नञ् समासाश्रयणेन पदे छिन्ने ''केवलोऽनिर्गुण'' इति भवति** । तेन नैर्गुण्यवाद्यभिलषितार्थसिद्धिर्न भवति । **''केवलोऽनिर्गुणश्चेत्यत्र द्वौ नञौ स्तः तस्मात् प्रतिकूलार्थमेवातिशयेन गमयति । सद्गुणबृंहितत्वमेव समर्थयति द्वौ नञौ प्रकृतमर्थं सातिशयं गमयतः इति न्यायात्।''**

## ६. ब्रह्मगुणाः स्वाभाविकाः

किं च ब्रह्मगुणानां अविद्योपाधिकत्वं कुतो न इत्युक्ते युक्तिरपि तत्र प्रमाणमस्ति ।

[२१]''ब्रह्मधर्मा न मायिका सत्यत्वात् नित्यत्वात् ब्रह्मस्वभावाद्वा ब्रह्मवत्'' इति ।

अपरमनुमानं यथा तद्गुणानां स्वाभाविकत्वे। ''ब्रह्म स्वाभाविकगुणवत् बिंबत्वात् जपाकुसुमवत्'' (गु.सौ. ६६१) । बिंबत्वं च प्रतिबिंबगतगुणनियामकतत्सदृशगुणयोगित्वम्।

ब्रह्मगुणस्वाभाविकत्वे अनुग्राहकश्रुतिरप्यस्ति। तद्यथा ''स्वाभाविकी ज्ञानबलक्रिया च'' इति । तस्मात् मायिना निर्गुणब्रह्माशा त्याज्या सगुणब्रह्म च भजनीयम् ।

---

१९. यु. (१) पृ. ३४१ (गु.सौ.) २०. यु. (१) पृ. ३४२, ३४३ (गु.सौ.)
२१. यु. (१) पृ. ३८२, ३८७, ३८९, ३९५ (गु.सौ.)

अतः परोदीरितं **''ब्रह्मनैर्गुण्यं नोपादेयम् अप्रामाणिकत्वात् प्रमाणविरुद्धत्वात् व्यर्थत्वाच्च''** । (गु.सौ. ६७४)

## ७. निर्गुणं ब्रह्म कुत्र कथ्यते ।[२२]

वेदेतिहासपुराणानि नारायणस्य गुणपूर्णत्वमेव साधयन्ति। एवं सत्यपि विषये मायिमतं साश्चर्यं खदेकरमिति वदन् वादिराजतीर्थः निर्गुणं ब्रह्म कुत्र कथ्यते इति साक्षेपं पृच्छति।[२६]

**''सर्वज्ञं सर्वकर्तारं नारायणमनामयं।**
**सर्वोत्तमं ज्ञापयन्ति महातात्पर्यमत्र हि।।**
**सर्वेषामपि वेदानामितिहासपुराणयोः।**
**प्रमाणानां च सर्वेषां तदर्थं चान्यदुच्यते। ।**

-इति नारदीये (विष्णुतत्त्वनिर्णयोदाहृते)

[२६]भागवते एवमेवानेकोक्तयः संति । तत्र प्रथमस्कन्धे तद्यथा

नारायणपरा वेदा....... नारायणपरा गतिः । ६१३, ६९४

सत्यं - शौचं दया दानं त्यागस्सन्तोष आर्जवम् । ७०६

इमे - चान्ये च यत्र महागुणाः। ७०९.

*इत्याद्यनन्तवाक्यानि सन्ति भागवते स्फुटम् । ७०४.

[२४]''वृषभरूपस्य धर्मस्य गोरूपधरायाः धरायाः कथामध्ये भगवद्गुणानां नित्यताभ्यासात् नित्यत्वे महातात्पर्यं अवगम्यते''। (गु.सौ. ७११) अतो गुणनाशोत्तरकालेऽपि निर्गुणत्वावसरो नास्तीति भावः। एवं भगवति ब्रह्मगुणान्

---

२२. यु. (१) पृ. ४०८ (गु.सौ.)    २३. सं.ग्र. पृ. ८३

* वाल्मीकीये रामायणेऽपि - बालकाण्डे प्रथमाध्याये श्रीरामगुणा उक्ताः। एवं भागवतस्थ रामायणस्थ भगवद्गुणनिरूपणपराः श्लोकाः परिशिष्ये (पृष्ठे २४५-२४७) उट्टङ्किताः।

२४. द्वै.वे.यु. (१) पृ. ४०९ सु (सुरोत्तमतीर्थटीका)

स्थापितवती धरा [२५]''प्राकृतत्वसान्तत्वसातिशयत्वदोष मिश्रितत्वाद्युपप्लुत जैवगुणभावं नाम नैर्गुण्यं तस्मिन् सूचनारूपगतिमपि'' (गु.सौ. ७१२) ददौ इति परवादिनं क्लेशयति युक्तिमल्लिकाकृत्।

[२६]अपि च भगवान् कृष्णः उद्धवं उपदिशन् स्वस्यैव अनन्तगुणवत्वं कण्ठरवेण उक्तवान् किल। तेन परोक्तं नैर्गुण्यं लज्जया काञ्चन गतिमप्राप्य शशश्रुंगस्य मध्ये संवत्सरस्य चतुर्दशमासे, मासे सप्तदश्यां तिथौ, भागवतस्य त्रयोदशस्कन्धे वा लीनमभूत् इति लोको मायिनमपहसति । (गु.सौ. ७१३-१४)

## ८. [२७]मानसिद्धे मेयता, साक्षात्कृते दृश्यता

यद्यपि ब्रह्मणः निर्गुणत्वं केनापि मानेन साधयितुं न शक्यं तथापि यदि तन्मानसिद्धं मेयता, साक्षात्कृतं ज्ञानदृश्यताख्यधर्मौ तस्य प्राप्तौ भवतः येन पुनः सगुणत्वसिद्धिः निर्गुणत्वासिद्धिरपि भवतः। किं च ज्ञेयतादृश्यतापदाभ्यां वाच्यता, तदनङ्गीकारे लक्ष्यता वा अनिच्छतापि प्राप्ता परस्य। तेन स्वन्यायस्ववचनस्वक्रियाविरोधाः सर्वेऽपि सम्भूय आपतेयुः परमते । (गु.सौ. ७१८, ७१९)

## ९. [२८]ब्रह्म किञ्चित् वस्त्वेव

तिष्ठतु प्रमाणविशेषचर्चा। ब्रह्मणः शशशृङ्गात् व्यावृत्यर्थमपि वा कश्चन वस्तुत्वधर्मः व्यावर्तकधर्मः अभ्युपेयः। नो चेत् प्रमाणप्रवृत्त्ययोगात्। तुच्छेऽपि तत्प्रवृत्तिप्रसङ्गात्। तथा च सर्वथा ब्रह्मणः वस्तुत्वमङ्गीकार्यम्। **''वेद्यं वास्तवमत्र वस्तु शिवदं''** इति भागवतोक्तेश्च। ((१)-१-४२)

---

२५. यु. (१) पृ. ४१० स (सत्यप्रमोदतीर्थटीका) (गु.सौ.)

२६. यु. (१) पृ. ४१० सु (सुरोत्तमतीर्थटीका) (गु.सौ.)

२७. यु. (१) पृ. ४१२ (गु.सौ.)

२८. यु. (१) पृ. ४१३ (गु.सौ.)

किं च ब्रह्म निर्गुणं इति वचनमेव परस्परविरुद्धं। ''मे माता वन्ध्या'' इतिवत्। कुत इति चेत्। एवं । ब्रह्मशब्दस्य गुणपूर्णत्ववाचित्वात् अपरस्य तच्छून्यत्ववाचित्वात् तयोः सर्वप्रक्रियाविरोध आपतति परम् ।

## १०. [२९]इतिहासपुराणानुरोधी खलु श्रुत्यर्थः

अपि च श्रुत्यर्थः स्मृत्यनुरोधेन कर्तव्य इति प्रमाणप्रथितमेव। **''इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्''** इति भारतवचनात्। तस्मात् ''केवलो निर्गुणश्चेति'' श्रुतिरपि तथैव व्याख्येया। भारते भीष्मप्रोक्तविष्णु-सहस्रनामसु **''गुणभृन्निर्गुणो महान्''** शिवप्रोक्तवासुदेवसहस्रनामसु **''निर्गुणो निष्कलोऽनन्तो''** इति श्रवणात् विष्णुरेव निर्गुणशब्दवाच्यः, तदेव निर्गुणश्रुत्यर्थः, न तु पराभिलषितं निर्गुणं ब्रह्म इति निश्चीयते ।

**''निर्गुणो निष्कलोऽनन्तोऽभयोऽचिन्त्योऽचलोऽच्युतः।''**
**इति स्मृतेः सत्पुराणभारतोक्तप्रकारतः ।**
**यच्छ्रुतेर्योजना तस्माद्विष्णुर्ब्रह्म श्रुतेर्बलात्।।** गु.सौ. ७४६

## ११. [३०]अखण्डार्थवादोऽपि सगुणब्रह्मपरएव

किं च परमतेऽखण्डार्थवादरीत्यापि पदवाक्यानां स्वार्थविशिष्टार्थपरं त्यक्त्वा अर्थसंकोचकरणं दृष्टम्। निर्गुणश्रुतिप्रसंगेऽपि सकलगुणनिषेधकार्थं त्यक्त्वा त्रिगुणवर्जितत्वरूपसंकुचितार्थकथने को दोषः। यतस्तेनापि ''सत्यं ज्ञानमनन्तं ब्रह्म'' इत्यत्रापि तदेवकृतं किल। **''अनशनात् कदशनं वरमितिन्यायात्''।** वस्तुतस्तु निर्गुणशब्दस्य त्रिगुणवर्जितत्वमेव मुख्यार्थ इति निर्गुणत्वश्रुतेः असङ्कुचितार्थ एव कृतः न तु कदशनन्यायात् । (गु.सौ. ७५२-७५४)

---

२९. यु. (१) पृ. ४२५-४२६ (गु.सौ.) ३०. यु. (१) पृ. ४२७, ४२८ (गु.सौ.)

## १२. ब्रह्मणः सगुणत्वेऽपरमनुमानं

[३६]किं च परमात्मनः सगुणत्वे परममुक्तं परमात्मानं पक्षीकृत्य अपरमनुमानं ग्रन्थकृदाह। विमतः परममुक्तः परमात्मा भावधर्माणां धर्मी मुक्तत्वात् घटादिवत्। इदमनुमानं विशेषतः चर्चितं ग्रन्थकृता ।

विमतः परमो मुक्तः परमात्मा घटादिवत् ।
मुक्तत्वात् भावधर्माणामपि धर्मीत्यबाधिता ॥

अनुमा सगुणं ब्रह्मसाधिका बाधिका तव ॥ (गु.सौ. ७५६)
बन्धश्च चेतनस्यैव न घटे नापि मोचिते ॥ (गु.सौ. ७५७)

अन्ते अनुमानफलं ''सगुणं ब्रह्म निर्गुणनिराकरणात् अप्रतिद्वन्द्वं, अलौकिकदिव्यरूपत्वात् अव्यभिचरितस्वातंत्र्यादिलिङ्गवत्वात्, सकलशब्द-प्रवृत्तिनिमित्त वत्वात् सर्वमानमनोरमम्, इति निगमयति ग्रन्थकारः। हरेः सकलवेदविषयत्वं श्रुङ्गारमुद्रया ग्रन्थकृद्वर्णयति। वैदिकपदानामनन्तत्वात् अपराण्युपनिषन्नारीमुखानि आचुंब्य जृम्भते इति ।

**अस्मद्ब्रह्माप्रतिद्वन्द्वं सर्वमानमनोरमम्।**
**अनन्तसुगुणस्तोममुखेन परितो दिशम्।**
**अपारोपनिषन्नारीमुखान्याचुंब्य जृम्भते।।** (गु.सौ. ७८६)

## १३. [३२]नैर्गुण्यशब्दः सगुणवाची ।

किं च नैर्गुण्यशब्द एव निर्गुणत्वाख्यगुणं वक्ति। न हि चेत् ''निर्गुणं'' नाम सगुणमेव ब्रह्म। द्वौ नञौ प्रकृतमर्थं सातिशयं स्थिरीकरोतीति न्यायात्। तेन व्याहतभाषी भवति परः। यथा जलनिरोधकसेतुभङ्गे सर्वजलं स्रवेत् तथा

---

३१. यु. (१) पृ. ४२९-३० (गु.सौ.) ३२. यु. (१) पृ. ४४८, ४४९ (गु.सौ.)

निर्गुणत्वस्य गुणनिवारकगुणाभावस्य छेदे नञन्तरेण निषेधे सर्वगुणागमो भवति ।

नैर्गुण्येनैव गुणिता नैर्गुण्यं च न चेन्नसौ ।
सगुणत्वं स्थिरीकृत्य विरुद्धार्थत्वकारकौ ॥ गु.सौ. ७९१

## १४. कपिञ्जलाधिकरणन्यायोऽपि सगुणब्रह्मपरः[३३]

अपि च कपिञ्जलन्यायाधिकरणादपि ब्रह्मणो अनन्तगुणत्यागात् त्रिगुणत्यागो वर इत्येतदपि सगुणब्रह्मपक्षं द्रढयति ।

**कपिञ्जलाधिकरणन्यायानुसरणादपि ।**
**अनन्तसुगुणच्छेदात् त्रिगुणच्छेदनं वरम्** ॥ गु.सौ. ७९४

''**कपिञ्जलानालभेत**'' इत्यत्र बहुत्वार्थकविभक्त्यन्तकपिञ्जलपदस्य शतसंङ्याककपिञ्जलपक्षिपरत्वसंभवेऽपि बहुहिंसाभयेन त्रित्वे पर्यवसानकरणन्यायानु-सरणात्'' इत्यर्थः ।। सु ।

## १५. अज्ञरूढेः विद्वद्रूढिरेव बलीयसी[३४]

शास्त्रप्रपञ्चे विद्वत्प्रयोगबाहुल्यादेव पदार्थोऽभिहितो भवति। न तु पदप्राप्तिमात्रेण प्रयोगं कुर्वते जनाः। तथैव निर्गुणशब्दः श्रुतिस्मृतिषु अनन्तकल्याणगुणाकरे विष्णावेव प्रयुक्तमर्थं परित्यज्य गुणाभावरूपमर्थं न वदन्ति। न हि पङ्कजशब्देन लोकः भेकं अनुमन्यते किं तु कमलमेव। तथैव निर्गुणं ब्रह्म इत्युक्तेऽपि प्राकृतत्रिगुणवर्जितत्वमेव मन्यन्ते विद्वांसः न तु गुणाभावम्। (गु.सौ. ८५४, ८५५)

---

३३. यु. (१) पृ. ४४९, सु. (सुरोत्तमतीर्थटीका) (गु.सौ.)

३४. यु. (१) पृ. ४८५, ४८६ (गु.सौ.)

## १६. सर्वप्रकारतोऽपि ब्रह्मणो सगुणत्वम्

किं च ब्रह्मणो (१) वाच्यत्वे (२) लक्ष्यत्वे (३) उभयहीनेऽपि वा, पक्षत्रयेऽपि अङ्गीक्रियमाणे वाच्यता, लक्ष्यता, उभयहीनतारूपधर्मप्राप्त्या सर्वथा सगुणत्वसिद्धिः निर्गुणशब्दव्याधातः दुर्वारमेव परपक्षे इत्यपि सिध्यति । तदुक्तम् ।

**विद्वत्प्रयोगबाहुल्यात् शब्दस्यार्थोऽभिधीयते।**
**पदलभ्यत्वतो नैव यद्वा तद्वा निगद्यते।** । गु.सौ. ८५४

विद्वद्रूढेः विद्वद्रूढ्यपेक्षया बलीयस्त्वज्ञापनाय विद्वत्प्रयोगेत्युक्तम् । **तदुक्तं चन्द्रिकायाम् ।** ''रूढित्वाविशेषेऽपि विद्वद्रूढेरेवासम्भावितज्ञानमूलाया बलीयस्त्वोपपत्ते'' श्चेति । ..... यदाहुः प्रयोगे सति निमित्तानुसरणं, न तु निमित्तमस्तीति प्रयोग' इति । स ।

**कन्यकानुदरेत्युक्ते काण्ठैः संयोजयन्ति किं ॥** गु.सौ. ८६०

कन्यकानुदरेत्युक्ते ''स्थूलोदराभावमेवार्थः न तु प्रतीतार्थः ।

## १७. तत्पुरुषसमासेन निर्गुणो नाम सर्वोत्तमः[३६]

**यस्मात्तत्पुरुषः श्रेष्ठस्तस्मादगुणसंज्ञया।**
**गुणोऽप्रधानं नेतीशो प्रोक्ता सर्वप्रधानता।** । गु.सौ. ८६३

यद्वा निर्गुणशब्दनिर्वचनमपि ब्रह्मणो सर्वप्रधानत्वरूपमर्थं गमयति। ''निरित्युपसर्गस्य निषेधोऽर्थः। निड़ निषेधे च विश्चये'' इति मेदिनी। गुणशब्दस्य चाप्रधानेत्यर्थः। ''गुणो मौर्व्यामिप्रधाने'' इति मेदिनी। ''रूपादावप्रधाने च'' इति हेम। गुणोऽअप्रधानो न भवति इति निर्गुण इति

३५. यु. (१) पृ. ४८५, ४८६

३६. यु. (१) पृ. ४९० (स) सत्यप्रमोदतीर्थटीका

तत्पुरुषः (नञ्) । अत्र ''अप्रधान'' इत्यत्र एको नञा अपरेण सह द्वौ नञौ प्रकृतमर्थं सातिशयं गमयतः इति न्यायात् निर्गुणशब्दस्य सर्वप्रधानतालाभः''। [४२] तथा च ब्रह्म निर्गुणं नाम सर्वोत्तम इति । अत्र बहुव्रीहिः अन्यार्थप्रधानत्वात् जघन्यः । तस्मात् तत्पुरुषः वरमिति ।

## १८. बहुव्रीहिरपि साधुरेव[३७]

यद्वा बहुव्रीहिकरणेऽपि न नो हानिः । सृष्टिकाले ''गुणाः अप्रधानाः ब्रह्माद्याः निर्गताः यस्मादुदरात् सः निर्गुणः'' इति भागवते उक्तत्वात् हरेः सर्वस्रष्टुत्वाख्यगुणलाभेन ब्रह्मणः सगुणत्वसिद्धिरेव भविता ।

**अप्रधानं जगदिदं सृष्टौ यस्माद्विनिर्गतम्।**
**स निर्गुणो हरिस्सर्वस्रष्टुत्वाख्यमहागुणः।।** गु.सौ. ८६४

## १९. आदिरन्त्येन सहेता[३८]

''एको देवो.......... केवलो निर्गुणश्च'' इति श्रुतौ आदिः एकत्वगुणः अन्त्येन निर्गुणत्वेन सहितः तन्मध्यपतितान् देवत्वादीन् गुणानेव सङ्गृण्हाति न तु अन्त्यं निर्गुणम् । आदिरन्त्येन सहेता इति पणिनीसूत्रात् अन्त्यस्य निर्गुणस्य इत् स्यात् लोपः स्यात् इति व्याकरणमुद्रयापि ब्रह्म नैर्गुण्यं न भजते । एकत्वादयः बहवश्च निरवकाशाः निर्गुणत्वं तु सावकाशं एकं च । अतो दुर्बलत्वात् निर्गुणस्यैव बाधः न तु एकत्वादीनाम् । इत् स्थानीयस्य निर्गुणत्वस्यैव लोप इति यावत् । तथा च श्रृत्युक्तं ब्रह्म सगुणं न तु निर्गुणम् ।

**आदिरन्त्येन सहितस्तन्मध्यपतितान् गुणान्।**
**सङ्गृण्हात्यन्ततो नान्त्यः प्रत्याहारमनुस्मर ।।** गु.सौ. ८८७

---

३७. यु. (१) पृ. ४९१ ३८. द्वै.वे.यु. (१) पृ. ५०३

## २०. [३९]वेदाः नारायणगुणब्रुवाः*

श्रुत्यर्थनिर्णयायैव भगवता बादरायणेन ब्रह्मसूत्राणि विरचितानि। श्रुतयः भगवद्गुणानेव वर्णयन्ति। सूत्रकृत् नैकं श्रुतिपदमपि त्यक्तुमुत्सहते। सर्वेऽपि वेदाः तद्वर्णाः पदानि वाक्यानि च ब्रह्मगुणानेव प्रतिपादयन्तीति समर्थयितुं ''**सर्वधर्मोपपत्तेश्च**'' इति सूत्रं चकार। तस्मात् निर्गुणश्रुतिरपि गुणवाचिन्येव ।

व्यासश्श्रौतगुणाम्बभोधौ नैकत्यागं च मन्यते।
सर्वधर्मोपपत्तेश्चेत्याह यत्स्वयमञ्जसा ॥ गु.सौ. ८९१

यद्वा चेतनो नाम ज्ञानेच्छाप्रयत्नवान् किल। सन्ति चानन्तचेतनाः। परमचेतनस्तु परमात्मा। एवं सत्यपि परमचेतनस्य देवदेवस्य विष्णोः सर्वधर्मशून्यत्वाख्यनिर्गुणत्वकथनं कथं श्रुतिमान्यं भवति। निर्गुणत्वं च तिर्यग्योनिगतजघन्यचेतनस्यापि नैव दृश्यते। एवं च सति, सकलगुणाकरस्य परमचेतनस्य सर्वनियामकस्य विष्णोः कथं निर्गुणोक्तिः शक्या। न केनापि वक्तुं शक्यते। तस्मात् विष्णुरेव परं ब्रह्म अनन्तगुणगणपूर्ण इति सिद्धमिति श्री वादिराजमुनीन्द्रः उपसंहरति ।

ज्ञानादिगुणशून्यत्वं चेतनस्य न हि क्वचित्
अतो निर्गुणवाक्यार्थो न सर्वगुणशून्यता । गु.सौ. १०१७

''**तस्मात् विष्णोर्गुणास्सर्वे नित्यास्सत्याश्च सर्वदा**''।

---

३९. यु. (१) पृ. ५०५, ५६७, ५६८

* श्रीमदाचार्याणां प्रयोगः

# ३.५ ब्रह्मणो अनन्तगुणपूर्णत्वविषये प्रमाणमीमांसा

## ३.५.१ तत्र युक्तिमीमांसायां

### प्रथमयुक्तिः

### १. पीठिका

मानाधीना किल मेयसिद्धिः । सा प्रमाणत्रितयेन भाव्या प्रत्यक्षानुमाना गमरूपेण। अनन्तगुणपूर्णत्वरूपप्रमेयं खलु केवलं आगमेन आगमानुग्रहीतयुक्त्या वा साध्यं साधयितुम्।

श्रीमदाचार्यैः सर्वमूलग्रन्थेषु तत्र तत्र ब्रह्मणो गुणपूर्णत्वविषये काश्चन युक्तयः प्रदर्शिताः। यद्यपि तादृशाःयुक्तयः प्रायः अनेकग्रन्थेषु मध्ये अन्ते वा उपपादितविषयनिगमनरूपेण दृश्यन्ते। तासां मध्ये काश्चन युक्तयः अत्र संगृह्यन्ते, एकस्याः व्याख्यापि क्रियते।

तत्र प्रथमतः महाभारततात्पर्यनिर्णये त्रयोदशाध्यायान्ते कंससंहारानन्तरं कृष्णस्य अनन्तगुणपूर्णत्वं आचार्यैः निगमितम्। तच्छ्लोकव्याख्यारूपेण कृष्णस्य अनन्तगुणपूर्णत्व मत्र प्रदर्श्यते।

**(१) तस्मादनन्तगुणपूर्णममुं रमेशं निश्चित्य दोषरहितं परयैव भक्त्या।**
**विज्ञाय दैवतगणांश्च यथाक्रमेण भक्त्या हरेरिति सदैव भजेत धीरः।**[१]

**-म.ता.नि. १३-१३५**

### २. श्लोकव्याख्या

श्लोकोऽयं श्रीमदाचार्यैः महाभारततात्पर्यनिर्णये निगमितः कंससंहारानन्तरम्। अत्र आचार्यसूर्यः साधकानुग्रहकम्पया तान्प्रति *उपासनाप्रकारमेवोक्तवान्।

---

१. म.ता.नि. पृ. २२३

* उपासा नाम जिज्ञासा।

धीरः रमेशं सदैव भजेत उपासीत इत्यन्वयः। कथमिति। दोषरहितं अनन्तगुणपूर्णं इति परयैव भक्त्या विज्ञाय निश्चित्य च भजेत। न केवलं रमेशमात्रं भजेत। किं तु तद्भक्तान् सर्वानपि दैवतगणांश्च यथाक्रमेण तारतम्यानुसारेण निश्चित्य विज्ञाय ते हरेः भक्ता इति भजेत। यथोक्तम् -

[२]''**रमाब्रह्मादयस्तस्य परिवारतयैव तु**''। -सदाचारस्मृतिः -३४

सदेति हरितद्भक्तभजनाख्यक्रियायां विशेषणम्। एवं यो भजते स एव धीरः न त्वन्यः इति अर्थात् लभ्यते।

## ३. कृष्णकथा अनन्तगुणपूर्णत्वसाधिका

रमेशस्य अनन्तगुणपूर्णवत्वं कथं ज्ञायते इति चेत्। तस्य पूर्वोत्तरवृत्तान्तेनैव इति तस्मात् इति शब्दव्याहरणेन ज्ञेयम्। तस्मात् इति जात्येकवचनम्। तेन बहवो हेतवो द्योत्यन्ते। के ते हेतवः यैः रमेशाख्यकृष्णस्य **अनन्तगुणपूर्णवत्वं** साध्यते इति त एव निरूप्यन्ते।

[३]कृष्णावतारार्थं ब्रह्मरुद्रेन्द्रादिदैवतैः नारायणः अर्थितः। तदुक्तं

''**ब्रह्मा भवश्च तत्रैत्य मुनिभिर्नारदादिभिः।**
**देवैः सानुचरैः सार्धं गीर्भिर्विष्णुमथास्तुवन्**''।। -भा. (१०)-३-२५

## ४. महाभारततात्पर्यनिर्णये च[४]

''**एतस्मिन्नेव काले कमलभवशिवाग्रेसराः शक्रपूर्वा**
**भूम्या पापात्मदैत्यैर्भुविकृतनिलयैराक्रमं चासहन्त्या।**

**ईयुर्देवाधिदेवं शरणमजगुरुं पूर्णषाड्गुण्यमूर्तिं**
**क्षीराब्धौ नागभोगे शयितमनुपमानन्दसन्दोहदेहम्**''।। ...११-१७८

''**अतस्त्वया भुव्यवतीर्य देव कार्याणि कार्याण्यखिलानि देव।**''

(११)-२१८

---

२. सं.ग्रं. पृ. २८९      ३. भा. पृ. ५३१

४. म.ता.नि. पृ. १८२, १८७

[5]भविष्योत्तरपुराणे अवतारोद्देश उक्तः॥

**''जातः कंसवधार्थाय भूभारोत्तारणाय च।**

**कौरवाणां विनाशाय पाण्डवानां हिताय च''॥**

**''इत्यादयो'' अत्र प्रमामानि।** **-जयन्तीनिर्णये**

यतः ब्रह्मादिभिरर्थितः तेषामशक्तिं प्रकटां विधाय च तस्मात् (अनन्तगुणपूर्णो रमेशः)।

*अवतारानन्तरं यदुद्दिश्य अवतारं कृतवान् - तत्तेन सफलीकृतत्वात् (ब्रह्म-रुद्र-गिरिजा-स्कन्द-सूर्य विघ्नेशादिवरदृप्तान् दैत्यान् अवध्यान्) - स्वयं हत्वा भीमादिभिः मारयित्वा च।

देवकीगर्भस्थ एव ब्रह्मादिभिः स्तुतः। प्रादुर्भावानन्तरमपि स्तुतत्वात् परब्रह्मेति पितृभ्यां। तदुक्तं ....... ''वसुदेव उवाच''-

[६]**''विदितोऽसि भवान् साक्षात् पुरुषः प्रकृतेः परः।**

**केवलानुभवानन्दस्वरूपः सर्वबुद्धिदृक्''** ॥ -भागवते (१०-४-१३)

**''देवक्युवाच''**

**''रूपं यत्तत् प्राहुरव्यक्तमाद्य ब्रह्म ज्योतिर्निर्गुणं निर्विकारम्''**॥

-भागवते (१०-४-२४)

अवतारकालेऽपि बहुशः देवैः प्रत्यक्षतः स्तुतत्वात् पुष्पवृष्टिभिश्च। तदुक्तं[७]-

---

५. सं.ग्रं. पृ. २५५

* ब्रह्मवरादवध्यान् कंस-उग्र-व्योम-गोरुपधरान् कालयवनादींश्च रुद्रवरादवध्यान् चाणूर-कुवल्यापीड - साल्व हंस-डिभिक वत्सासुरादींश्च पार्वतीवरादवध्यान् पूतनाचमुधुनिशकटासुररजकादींश्च स्कान्दवरादवध्यं बकं, विघ्नेशवरादवध्यं धेनुकं सूर्यवरादवध्यं सुगालवासुदेवं, दन्तवक्त्रं शिशुपालादींश्च स्वयं हत्वा, अन्यान् भीमादिभिः मारयित्वा इति ज्ञेयम्।

६. भा. ५३३

७. म.ता.नि. पृ. २१२

**''तस्योन्नतेषु स फणेषु ननर्त कृष्णो**
**ब्रह्मादिभिः कुसुमवर्षिभिरीड्यमानः।''** इत्यादयः मता.नि. १३-४०

यशोदायै द्विवारं, भीष्मकाय - धृतराष्ट्राय - अर्जुनाय - उत्तंकाय च एकवारं स्वस्य विश्वरूपस्य दर्शितत्वात्।

अर्जुनाय गीतोपदेशनिमित्तात् स्वस्यैव परब्रह्मतोक्तेः ; तदुक्तं गीतायाम् (अर्जुन उवाच)।

[८]**''परं ब्रह्म परं धाम पवित्रं परमं भवान्''।** इत्यादिषु (१०-१२)

उद्धवं निमित्तीकृत्य अर्जुनायेव अध्यात्मज्ञानमुपदिश्य स्वस्य परब्रह्मतायाः उपदिष्टत्वात्।

तदुक्तम् ह्न उद्धव उवाच[९]

**''त्वं ब्रह्म परमं व्योम पुरुषः प्रकृतेः परः।**
**अवतीर्णोऽसि भगवन् स्वेच्छोपात्तपृथग्वपुः॥'' भा. ११-१६-१**

इत्याद्यनेकहेतुभ्यः रमेशाख्यकृष्णस्य ज्ञानबलानन्दकारुण्यवात्सल्याद्यनेक-गुणवत्वं दोषराहित्यं च भागवतादिग्रन्थावमर्शेन सिध्यत्येव। दैत्यसंहारादिना न तस्य दोषलेशोऽपि पापलेपोऽपि। न कारुण्यवात्सल्यादिप्रदर्शनेन पुण्यं वा। तस्य तदा काचन सक्तिरेव नासीत्। सर्वत्र समबुद्धिरासीत्। असक्तिरनभिष्वङ्गवतो ऋष्यादियोगिनामेव पापपुण्यादिप्रसक्तिर्यदा नो भवेत्, योगीश्वरे कृष्णे गीतोपादेष्टरि जगद्गुरौ ताभ्यां (पुण्यपापाभ्यां) का कथा? (किमु वक्तव्यम्)

यथोक्तं स्वयं भगवता कृष्णेन गीतायाम्।

**''यस्य नाहङ्कृतो भावो बुद्धिर्यस्य न लिप्यते।**
**हत्वापि स इमान् लोकान् न हन्ति न निबध्यते॥''**गीता[१०]-१८-१७

---

८. गी.भा. पृ. १६६     ९. पू.सं.भा. ८१०

१०. गी.भा. पृ. २४४

तस्मात् *शतशोऽक्षोहिणी सैन्यसमेतदैत्यहननेनापि न कश्चन पापलेपः कृष्णस्यासीत् इति तस्य दोषदूरत्वं शिष्टपरिपालनज्ञानानन्दाद्यनेकगुणवत्वेन अनन्तगुणवत्वं सिध्यति।

एतादृशं कृष्णं भजेत सेवेत उपासां कुर्वीत इति आचार्यदिशः।

एवं कृष्णस्य अनेक बलज्ञानकार्याणि तस्य अनन्तगुणपूर्णत्वं साधयंति।

## द्वितीययुक्तिः

**कुतोऽनन्तगुणं ब्रह्म कुतः सोऽनन्तनामकः।**
**इति चेत् सङ्ग्हिष्यामि गुरुवाक्यानुसारतः॥**

ब्रह्म तावत् बहुगुणवत्। बृह् वृद्धौ इति धातोः गुणैर्बृंहितत्वात् ब्रह्मेति शब्दः निष्पन्न इति सर्वे अभ्युपयन्ति। ब्रह्मणः गुणान् गणयितुं भवपाद्ममुख्याः महायत्नं चक्रिरे इति पौराणिकी कथा। ते स्वयं योगेश्वरा भगवद्गुणानां संख्याने महाप्रयत्नं कृत्वापि पारं न जग्मुः इति भागवतोक्तेः अनन्त इति नामभाजनोऽभून्नारायणः इति चतुर्मुखोऽवादीत्। यथोक्तम् :-

[१]"**को नाम तृप्येत् रसवित्कथायां महत्तमैकान्तपरायणस्य।**
**नान्तं गुणानामगुणस्य जग्मुर्योगेश्वरा ये भवपाद्ममुख्याः॥**"

-इति (१)-१८-१४

[२]तत्र विजयध्वजीये योगेश्वराः तत्तदधिकारियोग्यमोक्षोपायोपदेष्टृप्रधानाः (ब्रह्मरुद्रादय)

---

* बालकृष्णेन कंसस्य विंशदक्षोहिणीसैत्यं हतम्। जरासंधः अष्टादशवारं कृष्णेन सह युद्धं कृत्वा प्रतिवारं स्वस्य अक्षोहिणीत्र्यधिकविंशत्सैत्यं नष्टमभूत्। कालयवनोऽपि त्रिकोटिसङ्ख्यया अक्षौहिणीकया युतः कृष्णमाक्रम्य ससेनः नष्टोऽभूत्। साल्वहंसडिभिकादयोऽपि अक्षोहिणीसैन्येन सह स्वयं नष्टाः। एवं कृष्णावतारे नष्टदैत्यानां संख्या असंख्या। सर्वेश्वराय बलवीर्यमहार्णवायऽनन्तबलाय किं तत्। नैवाद्भुतम्।

१. भा.टी.वि. (१) पृ. २२०    २. भा.टी.वि. (१) पृ. २२०

**''अगुणस्य सत्वादिगुणक्षरहितस्य..गुणानां नान्तं ज्ञानादिगुणानां अन्तं अवसानं न जग्मुः।''** इति व्याख्यातम्।

[३]श्रीधरीयव्याख्यानेऽपि ''..............

**''अगुणस्य प्राकृतगुणरहितस्य कल्याणगुणानां अन्तं ये योगेश्वरास्तेऽपि न जग्मुः एतावन्त इति न परिगणयाञ्चक्रुः। भवः शिवः पाद्मः ब्रह्म च मुख्यौ येषां ते।।''** इति।। व्याख्यातम्।

एतेन नारायणस्य गुणानन्त्यं सत्वादिगुणराहित्यरूपागुणत्वं (निर्गुणत्वं)। अद्वैतिभिरपि अङ्गीकृतमिति स्पष्टं ज्ञायते।

अनेन अनन्तगुणपूर्णत्वे ब्रह्मादिदेवैरपि साकल्येन ज्ञातुमशश्यत्वरूप-हेतुरुक्तो भवति अस्मिन् भागवतश्लोके।

## तृतीययुक्तिः

श्रीमदाचार्यैः द्वादशस्तोत्रे भगवतो अनन्तगुणवत्वसाधने नवनवीना युक्तिः प्रयुक्ता। अनया युक्त्या भगवतः न केवलमस्तित्वं किन्तु तस्य सार्वज्ञ्यं परशक्तिमत्वं सर्वोत्तमत्वादयः शक्याः साधयितुमिति तां युक्तिं पश्यामः।

**''बहुचित्रजगद्बहुधाकरणात् परशक्तिरनन्तगुणः परमः।।''**

द्वा.स्तो. ४-२

भगवतोऽनन्तगुणवत्वे बहुप्रकारजगतः सृष्टिकृतत्वमेव कारणमित्युक्त-माचार्यैः द्वादशस्त्रोत्रे।

---

३. भा.टी.श्री. पृ. ४२

इयं सर्वानुभवदृष्टा सृष्टिः नैकप्रकारा। अनन्ताः जीवप्रकाराः, परस्परं विलक्षणाश्च, जडेष्वपि तादृशी रचना सर्वैरपि अनुभूयते। न चैतादृशी सृष्टिः सामान्यचेतनेन कर्तुं कुतः स्मर्तुमपि अशक्य इति सर्वानुभवसिद्ध एव। सर्वज्ञत्वं विना केनापि एतादृशं जगत्सर्जनेऽशक्यत्वात् स तु कर्ता सार्वज्ञ्यादिगुणोपेत एव स्यात् इति निश्चिनुते चतुरो जनः। ते नमः कौशलायेति नमन्ति च देवा अपि स्रष्टारं ब्रह्मयोनिम्। विश्वसृजोऽपि विभुशंभुपुरन्दरा एतादृशजगत्सर्जने तमेवालम्बन्ते। तदुक्तं श्रीविश्वपतितीर्थीयव्याख्याने -

(१) बहूनि चित्राणि आश्चर्याणि यस्मिन् तत् बहुचित्रं च तच्च तज्जगच्च बहुचित्रजगत् ॥

(२) बहुचित्रमनेकावान्तरभेदभिन्नं च तत् जगच्चेति वा तस्य बहुधाकरणं भूयो निर्माणं बहुचित्रजगत् बहुधाकरणं तस्मात्। यद्वा

(३) बहुचित्रजगदिति द्वितीयान्तपदं भिन्नं। बहुचित्रजगत् बहुधाकरणात् तथा च बहुधाप्रकारैः निर्माणात् इत्यर्थः। पराऽचिन्त्या शक्तिर्यस्य स परशक्तिः।

अत एव अनन्तगुणः। अनन्ता नित्या निरवधिका वा गुणाः बहुचित्रजगन्निर्माणोपयुक्ताः

सार्वज्ञ्यादिगुणा यस्य स तथोक्तः। अत एव परमः सर्वोत्तमः'' ॥

एवं अनन्तगुणकथने आचार्यैः जगज्जन्मरचनाकौशल्यादिचातुरीरूपायुक्तिरुक्ता।

---

१. द्वा. स्तोव्या. ९३-९५

## चतुर्थयुक्तिः

सन्ति च दार्शनिकाः ये भगवन्तं निराकारं निर्गुणं नामरूपरहितं इति वदन्ति। परं श्रीमदाचार्याः वेदान्, वेदोपनिषदां व्याख्यानभूतानि पुराणानि स्वग्रन्थेषु उदाहृत्य भगवतो निराकारादिकं निराकुर्वन्ति। तादृशान्यतमं ब्रह्माण्डपुराणवचनमुदाहृत्य अनन्तगुणवत्वं साधयति सर्वमूलाचार्यः।

सर्वेऽपि वेदाः प्राण एव प्राणनामा एव इति ऐतरेयोपनिषदि यदुच्यते तद्व्याख्यानावसरे ब्रह्माण्डपुराणवचनमुदाहृतम्। भगवतः अनन्तनामसद्भावात् भगवान् ''अनन्तगुण'' इति तत्पुराणवचनम्। यतः सर्वाण्यपि नामानि गुणवाचकानि ततः सोऽनन्तगुण इति तत्र तात्पर्यम्।

तद्यथा

[1]''**अनन्तनामकत्वाच्च सोऽनन्त गुण ईरितः॥**
**पृथङ् नामानि यस्मात्तद्गुणानेव प्रचक्षते॥**''

-इत्यादि ब्रह्माण्डे ए.भा.द्वि.प्रः अ. २

ऐतरेयोपनिषदः द्वितीयप्रधदृके द्वितीयाध्याये उपनिषन्मन्त्रः एवं अन्ते पठितः।

''**ता वा एताः सर्वा ऋचः सर्वे वेदाः सर्वे घोषाः**
**एकैव व्याहृतिः प्राण एव प्राण ऋच इत्येव विद्यात्**''

ऐतरेयोपनिषत् विशेषतः हरिवायुमहिमपरा। सर्वेऽपि ऋङ्मन्त्रा, सर्वे वेदाः, सर्वशब्दा(ध्वन्यात्मका) ''**भूर्भुवःस्वः**'' इति व्याहृतिः - एवं सर्वेऽपि ध्वनिभेदाः अपि प्राण एव विष्णावेव विष्णुमेव प्रतिपादयन्ति इति अस्यार्थः॥

---

१. ऐ.भा.ता.पृ. ८१, ९१

सर्वेऽपि वेदा स्वरवर्णपदात्मकाः अर्थवन्तः भगवद्गुणानेव प्रतिपादयन्ति। सर्वेऽपि शब्दाः नामवाचका क्रियावाचका वा उपसर्गा वा वेदेषु भगवद्गुणानेव बृवते । सर्वाण्यपि नामानि गुणविशेषानेव वर्णयन्ति भगवतो। **''यानि नामानि गौणानि''** इत्युक्तेः। गौणशब्दो गुणसंबन्धी न तु अप्रधान इत्यर्थे। भगवतो यतः अनन्तनामानि सन्ति तस्य अनन्तगुणानेव ते वदन्ति इति भाष्यार्थः।

**तदुक्तं एतरेयभाष्यरत्नमालायां ताम्रपर्णीयायां -** ''न केवलं ऋषिवेदनामान्येव भगवद्वाचकानि। किं तु देवतापरत्वेन प्रसिद्धास्ता एव सर्वा ऋचः सर्वे वेदाः सर्वे घोषाः एकैव व्याहृतिः। एकमेव एकप्रकारमेव व्याहरणं नाम किं विषयकमिदं नाम प्राणे भगवद्विषय एव। ऋचस्तु विशेषतः प्राणे विषय एवेति विद्यादिति''।। (खण्डार्थः )।

**''तथा चैतद्ब्रह्मैतत्सत्यमित्युपक्रमोक्तं निर्दोषगुणपूर्णत्वं युक्तमिति मूलाभिप्राय इति भावः।।''**

तथा च ब्रह्माण्डपुराणे अस्या एतदुपनिषदर्थोऽभिहितो इत्यभिप्रायेण तदेवोदाहृतमाचार्यैः। सर्वाण्यपि भगवन्नामानि पृथक् पृथग्गुणाभिधायकानि तस्मात् भगवान् अनन्तगुण इति भाष्याभिसन्धिः।।

## पञ्चमयुक्तिः

श्रीमदाचार्यैः रचितग्रन्थेषु दशप्रकरणेषु अन्यतमः विष्णुतत्वविनिर्णयः। तदन्ते आचार्यैः विष्णोः गुणपूर्णत्वं दोषदूरत्वं प्रकरणार्थनिगमनरूपेणो-द्घोषितम्। तदत्र संक्षेपेण निरूप्यते।

**[१]''अतो निश्शेषदोषवर्जितः पूर्णानन्तगुणो नारायण इति सिद्धम्''**

**वि.त.नि. परिच्छेद ३।।**

---

१. वि.त.नि.टी. पृ. ३६१

भगवतो नारायणस्य अनन्तगुणत्वसाधनार्थं श्रीमद्विष्णुतत्वविनिर्णयः इति प्रकरणग्रन्थः श्रीमदाचार्यैः व्यरचि। तत्र हि नारायणस्य निर्दोषाशेषसद्गुणत्वं सदुक्तिभिः साधयिष्यामि इति प्रकरणादौ प्रतिजज्ञे। उपसञ्जहार च

**''अतो निश्शेषदोषवर्जितः पूर्णानन्तगुणो नारायण इति सिद्धम्''** इति।

अत इत्यनेन समग्रं प्रकरणार्थं अनन्तगुणत्वे हेतुत्वेन सञ्जग्राह। तथा हि - अत्र हि प्रकरणे वर्णनित्यत्व - वेदापौरुषेयत्व - सिद्धार्थबोधकत्व - प्रामाण्यस्वतस्त्व भेदस्य धर्मिस्वरूपत्वादीनि नैकानि प्रमेयानि संसाधितानि। संसाधितैः तैर्विशेषैः नारायणस्य सदागमैकविज्ञेयत्वं समतीतक्षराक्षरत्वं निर्दोषत्वं च प्रत्यपादिषत। अत एष नारायणः कल्याणगुणप्रतिपादकसदागमैकविज्ञेयः न पुनर्दोषबोधकैर्दुरागमैरत एष निर्दोषो अनन्तगुण इति सेत्स्यति। यतश्चैष स्वतः प्रमाणैः अपौरुषेयत्वेन दोषशङ्काकलङ्कविधुरः निखिलैरपि वेदसन्दोहैः महातात्पर्यतः स्वप्राधान्येन प्रतिपाद्यः अतोप्येष अनन्तगुणपूर्णः।

यतश्च भगवत्प्रीतिरेव मोचिका, प्रीतिश्च गुणोत्कर्षज्ञानादेव, नाभेदज्ञानात् श्रुतिश्च संसारप्रहाणायैव प्रवर्तते अतोऽपि श्रुतीनां विष्णोः गुणोत्कर्षे एव महातात्पर्यं विजानीमः। स्वयमप्युदघोषयत् श्रुतिः

**''न तादृशी प्रीतिरीड्यस्य विष्णोः गुणोत्कर्षज्ञातरि यादृशी स्यात्। तत्प्रीणनान्मोक्षमाप्नोति सर्वस्ततो वेदास्तत्पराः सर्व एव।''** इति च।

न चास्ति अभेदे श्रुतितात्पर्यमित्यत्र किञ्चिन्मानम्। तत्वमस्यादिश्रुतीनामपि भेदतात्पर्यवत्वस्य सूपपादनात्। अभेदतात्पर्यस्य युक्त्यादिविरोधात्। भेदस्य च वस्तुस्वरूपत्वात् नात्र कश्चित् क्षुद्रोपद्रवः। तदेवं श्रुतितात्पर्यसिद्धस्य प्रत्यक्षस्य भेदस्य सत्यत्वात् क्षराक्षरात्मकसकलजगदुत्कृष्टत्वाच्च स एष देवो नारायणोऽनन्तगुण इति निष्कण्टकः पन्थाः।

स्वनिर्वाहकस्य विशेषस्य भगवति अङ्गीकाराच्च गुणरूपस्य नारायणस्य अनन्तगुणत्वं नासंभावितम्।

भगवानाचार्यः प्रकरणान्ते ''अतो निश्शेषदोषरहितः पूर्णानन्तगुणो नारायणः इति सिद्धम्'' इत्यत्र अतः शब्देन सर्वं प्रकरणोपपादितं विषयजातं अनन्तगुणत्वे हेतुत्वेन अभिप्रैतीति सर्वं चतुरस्रम्।

# ब्रह्मणो ''अनन्त'' इति नामवत्वे युक्तयः

## तत्र प्रथमयुक्तिः

भगवतः अनन्त इति नामवाच्यत्वे कारणं बृहदारण्यकोपनिषत्प्रमाणात् आचार्यैरुक्तम्। भगवान् सर्वव्यापी सर्वत्र-सर्वदेशेषु वर्तते। तस्मात् तस्यानन्त इति नाम इति प्रमाणं उदाहृतमाचार्यैः। यत्र यत्र भगवान् वर्तते तत्तत्पदार्थनामा स इति निर्गलितोऽर्थः। सर्वत्र व्यापित्वात् सर्वपदार्थनियामको भूत्वा तत्तन्नामवाच्यो भवितुमर्हति।

तद्यथोक्तम्

[१]**सर्वव्यापी तु भगवान् अनन्त इति कीर्तितः।**
**दिङ्नामा स तु विज्ञेयो दिक्षुस्थो नित्यदेशनात्।।** इति च।

**''एतत्सम्राळिति स वै नो ब्रूहि याज्ञवल्क्य श्रोत्रमेवायतनमाकाशः प्रतिष्ठानं त इत्येतदुपासीत काऽनन्तता याज्ञवल्क्य दिश एव सम्राळिति होवाच तस्माद्वै सम्राळपि यां कां च दिशं गच्छति नैवास्या अन्तं गच्छत्यनन्ता हि दिशः दिशो वै सम्राट् श्रोत्रं वै सम्राट् परमं ब्रह्म वैवं श्रोत्रं जहाति .....''** -बृ. ६(अ) १(षडाचार्यब्राह्मणं) - ५ (मन्त्रः)

बृहदारण्यकोपनिषदि षष्ठाध्याये षडाचार्यब्राह्मणे प्रथमे पञ्चममन्त्रे

१. उ.प्र.भा. पृ. ६८४, ६८८

श्रोत्रमेव ब्रह्मेति उपासनं कार्यमित्युक्तम्। श्रवणव्यापारदातृत्वात् भगवतो श्रोत्रमिति नाम। श्रोत्रस्थ एव दिक्स्थोविष्णुः दिङ्नामापि श्रोत्रदिक्तस्थयोरैक्यात् विष्णोश्च सर्वव्यापित्वात् तस्य अनन्तेति नामोक्तम्। तदुक्तं भाष्ये।

**''सर्वव्यापी तु भगवान् अनन्त इति कीर्तितः॥''**

तदुक्तं भावबोधे **''दिक्षुस्थ इति सप्तम्या अलुक्''**।[२]

श्रीराघवेन्द्रतीर्थीयखण्डार्थे च।[३]

**''ब्रह्म श्रोत्रं वै श्रवणशक्तिदत्वात्...........।**
**सच्छास्त्रश्रवणादेरसम्भवात् अतः तद्दातृत्वात् श्रोत्रं ब्रह्मेत्यर्थः।**
**........ दिक्षु स्थितो दिङ्नामा विष्णुरेवेत्यर्थः।**
**.............यतो दिशोऽनन्ताः दिक्षु स्थितो दिङ्नामा विष्णुः सर्वव्यापी। तस्माद्वै .....**

**यः कोऽपि यां कां च दिशं तन्नामकभगवदधिष्ठितं। दिशं गच्छति। अस्या दिशो अन्तमवसानं न गच्छतीत्यर्थः। यदधिष्ठितदिशामेवानन्तत्वं सोऽनन्त इति किमु वाच्यं इति भावः।''**

एवं सर्वदिक्षु स्थितत्वात् सर्वव्याप्तिमत्वात् विष्णोरनन्तत्वकथनं युज्यते।

तथा च अनन्तनामवत्वे विष्णोः सर्वदिक्षु व्याप्तिरूपयुक्तिरभिहिता।

## तत्र द्वितीययुक्ति

भगवतः अनन्त इति नामसद्भावे किं प्रमाणमित्युक्ते भागवते ब्रह्मणो विभूतीनामन्तराहित्यात् अथवा आनन्त्यात् तस्य अनन्तेति नामा इत्युक्तम्॥ तत्सप्रसंगमेव अत्र विविच्यते।

---

२. बृ.भा. पृ. ५४०, ५४७ ३. बृ.वृ.खं. पृ. १७३

किं च भगवतो विभूतयोऽपि संख्यया संख्यातुमशक्यत्वात् भगवान् अनन्त इति गीयते इति चतुर्थस्कन्धे श्रूयते। यथोक्तम्।

[1]**''वरं वृणीमहेऽथापि नाथ त्वत् परतः परात् ।**

**न ह्यन्तस्त्वद्विभूतीनां योऽनन्त इति गीयते॥'' -भा. (४)-**
३०-३१

प्राचीनबर्हिषः सुताः प्रचेतसः पितुरादेशानुसारेण अन्तरुदधौ जपयज्ञेन पुरञ्जननामानं जनार्दनं अतोषयन्। तपसा तुष्टो भगवान् वरं वृणीतुं तान् आदिदेश। ते तु भगवन्तं रुद्रगीतेनास्तुवन् ऊचतुश्च।

परतः परात् त्वत् त्वत्तः सङ्गतिलक्षणं वरमेव वृणीमहे। त्वं परादपि परः त्वद्विभूतीनां अन्तः अवसानं नास्त्येव। तादृशानन्तरूपोऽसि।

[1]तदुक्तं विजयध्वजीये **''भगवत्प्रसाद एवेप्सितो वरः। परतः परत्वमुपपादयति न हीति। ''नान्तोऽस्ति मम दिव्यानां विभूतीनां परन्तप।'' अतोऽनन्तेन तथा हि लिङ्गं'' ''परो मात्रया'' ''इत्यादि प्रमाणम्''**। इति॥

अनेन जनार्दनस्य नामान्तरं अनन्तः इति । तस्य कारणं विभूतीनां अन्तरहितत्वम्।

[2]एकादशस्कन्धभागवते [3]दशमगीतायामपि भगवद्विभूतीनामपारत्व-वर्णनस्य दृष्टत्वात् अर्जुनोद्धवेत्यादि ज्ञानिभिरनुभूतत्वात्तस्य अनन्तनामगानं योगिप्रत्यक्षगम्यमिति ज्ञायते।

[4]श्रीधरीयेऽपि........

**''...त्वद्विभूतीनामन्तो नास्ति यतो अनन्तविभूतित्वादनन्त इति गीयसे।''**

---

१. भा.टी.वि. (३) पृ. ३५०
२. भा. (११) पृ. ८१०-११
३. गी.भा. पृ. १६८-१७६
४. भा.टी.श्री. पृ. ६६ (१९८८)

एवं च प्रचेतसां योगिप्रत्यक्षेण भगवतो अनन्तनामकत्वं अनन्तविभूतिमत्वाज्ज्ञायते।

## तत्र तृतीययुक्तिः

पुनरपि भागवते भगवान् अनन्त इति गाने महद्गुणत्वाख्ययुक्तिरूक्ता। तद्यथा।

**''कुतः पुनर्गृणतो नाम यस्य महत्तमैकान्तपरायणस्य ।**
**योऽनन्तशक्तिर्भगवाननन्तो महद्गुणत्वात् यमनन्तमाहुः ।।''**

इति। सूतेन शौनकं प्रत्युक्तः। -भा. १.१८.१९

श्लोकोऽयं सूताचार्येण शौनकं प्रति स्वस्य दौष्कुल्यं दुष्कुलोत्पत्तिनिमित्तं आधिंमनोदुःखं महात्मनां योगेन परिह्रियते इति उक्तः। महत्तमैकान्तपरायणस्य हरेः नाम गृणतः पुंसः आधिं विधुनोतीति किमु वक्तव्यं इति पुनरुद्गदितम्। हरिभक्ताद्हरेरुत्तमोत्तमत्वात्। कुतः। सः अपिरिमितशक्तिमान्, अनन्तः देशकालपरिछेदशून्यः। नैतावदेव, किं तु महद्गुणत्वात् पूर्णगुणत्वात् तं अनन्तमित्याहुः इति सूतवचनं शौनकं प्रति।

[१]तदुक्तं विजयध्वजीये

''महत्तमैकान्तपरायणस्य तस्य हरेः नाम गृणतः पुंसः आधिं विधुनोतीति कुतः पुनः किं वक्तव्यमित्यन्वयः। अनन्ताः अपरिमिताः शक्तयो यस्य स तथा। देशादितः परिच्छेदो न विद्यते यस्य सोऽनन्तः यः अनन्तशक्तिः अनन्तश्च। न केवलं ताभ्यामानन्त्यं किं तु गुणानन्त्यमपि अस्तीत्याह महदिति।''

महद्गुणत्वात् इति कथमिति चेत्। **''छान्दसत्वात् महच्छब्दस्य**

---

१. भा.टी.वि. (१) पृ. २२१

**महादेशाभावः।''** इति विजयध्वजीये। महच्छब्दः बहुत्ववाची, **''बहुः-पूर्णतायाः''**मिति वचनात् पूर्णत्ववाची। तस्मात् महद्गुणत्वात् इत्यस्य पूर्णगुणत्वात् इत्यर्थः। तथा च महद्गुणत्वात् पूर्णगुणत्वात् यमनन्तमाहुः वैदिका इति शेषः। **''सत्यं ज्ञानमनन्तं ब्रह्मेति इत्यादि वेदान्ताः आहुरित्यन्वयः''** इति।

[२]श्रीधरीये तु दुष्कुलजननिमित्तमनोदुःखपरिहारकत्वेन **''अनन्तस्य नाम गृणतः..........दौष्कुल्यं विधुनोति इति''** उक्तम्। एवमेव त्रिवारमन्वयं कृत्वोक्तं दुष्कुलजन्यपापपरिहारार्थाय। गुणानन्त्यं देशकालानन्त्यं कण्ठरवेण नोक्तं द्विवारं अनन्तशब्दसद्भावेऽपि देशकालगुणानन्त्यं रूपस्य अर्थस्य वक्तुं शक्यत्वेऽपि।

तथा च विष्णोरेव कुतो महद्गुणवत्वं। अन्येषामभावात् तस्मिन्नेवभावात् महद्गुणोक्तिः विष्णाविति ध्वनिः।

## ३.५.२. तत्रशब्दप्रमाणमीमांसा

**१. ''ब्रह्मविदाप्नोति परं। तदेषाभ्युक्ता। सत्यं ज्ञानमनन्तं ब्रह्म। यो वेद निहितं गुहायां परमे व्योमन्। सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चितेति।''-कृष्णयजुर्वेदः -तैत्तिरीयोपनिषत् ब्रह्मवल्ली**

इयमनन्तश्रुतिः (**''सत्यं ज्ञानं अनन्तं ब्रह्म''** इत्यत्र) कृष्णयजुर्वेदीय-तैत्तिरीयाण्यके सप्तमाष्टमनवमाध्यायात्मके श्रूयते। अस्याः उपनिषदः ऋषयः क्रमेण विष्णुः ब्रह्मा वरुणः भृगुः, श्रीहरिरेव देवतेति यजुस्संहिताग्रन्थमुदाहृत्य

२. भा.टी.श्री. (१) पृ. ४३

तद्भाष्ये श्रीमदाचार्यः अवोचत्। अस्यामुपनिषदि शिक्षावल्ली, ब्रह्मवल्ली, भृगुवल्लीति त्रयोऽध्यायाः सन्ति। तत्रापि **"अनन्त"**श्रुतिः ब्रह्मवल्यां श्रूयते। अस्याः उपनिषदः [१]मतत्रयाचार्याणां भाष्याणि उपलभ्यन्ते।

ब्रह्मवल्या आरम्भ एव उपनिषदृषिः ब्रह्मप्राप्तिप्रकारमुक्त्वा तल्लक्षणमुक्तवान्। तद्यथा।

[२]"ब्रह्मविदाप्नोति परं। तदेषाभ्युक्ता। सत्यं ज्ञानं अनन्तं ब्रह्म। यो वेद निहितं गुहायां परमे व्योमन्। सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चितेति"॥

[३]अत्र अद्वैतभाष्यरीत्या "अनन्त" श्रुत्यर्थसार एव .... अत्र सत्यं ज्ञानं अनन्तमिति त्रयश्शब्दाःनिरपेक्षेण ब्रह्मशब्देन सम्बद्धास्सन्तः विशेषणशब्दाः विशेष्यार्था एव ते (विशेष्यशब्दः ब्रह्मशब्दः) । तथा च ब्रह्म सत्यं ब्रह्मज्ञानं (ज्ञानस्वरूपं), तदनन्तं च। अत्र ज्ञानशब्दः भावसाधनः, न तु ज्ञानकर्तु, ब्रह्मविशेषणत्वात्, सत्यानन्ताभ्यां सह। यदि ज्ञानकर्तृत्वं ब्रह्मणः आपद्यते तर्हि तद्ब्रह्म विकारि स्यात्। तथात्वे कथं सत्यं भवेदनन्तं च। तदनन्तं यन्न कथमपि विभक्तं स्यात्। यदि ब्रह्म ज्ञानकर्तृ भवेत् तदा तत् ज्ञेयज्ञानाभ्यां प्रविभज्यानन्तता न स्यात्। तत्र प्रमाणं "यत्र नान्यद्विजानाति स भूमा अथ यत्रान्यद्विजानाति तदल्पमिति श्रुतिः"।

श्रुतिरियं न केवलं अन्यविज्ञानप्रतिषेधपरा किन्तु स्वात्मन्यपि। तथा कल्पने अनुपपत्यभावात्। अपि च आत्मनश्च विज्ञेयत्वे ज्ञात्रभाव-प्रसङ्गः।

---

१. तै.उ.शां.भा. पृ. २८०
२. तै.उ.शां.भा. पृ. २८०
३. तै.उ.शां.भा. पृ. २८०-२८७ परिशिष्टं-१२ (पृ. २४८-२५३) पश्यतां

एवं ज्ञानशब्देन ब्रह्मणो ज्ञानस्वरूपमात्रं लक्षणमभिप्रेतमद्वैतिभिः।

अनन्तशब्देन तैः देशकालवस्तुतः आनन्त्यमुच्यते। देशकालाभ्यां आनन्त्यं नाम देशतः कालतः परिच्छेदाभावः। वस्तुतः आनन्त्यं नाम सर्ववस्तुभ्यः ब्रह्मणः भेद इति अभिहितः। आकाशस्य देशतः आनन्त्यमुक्तं परिच्छेदाभावात्। आकाशस्य कालतः आनन्त्यं नास्ति कार्यत्वात् ; ''**आत्मनः आकाशः सम्भूत इति श्रुतेः।**'' वतुतः आनन्त्यं च नास्तिघटपटादिवस्तुभ्यः भेदात्। तद्भिन्नवस्त्वन्तराभावाच्च वस्तुतः ।

[४]विशिष्टाद्वैतमतरीत्या अनन्तश्रुतेरर्थस्तु ''देशकालवस्तुपरिच्छेदाभावः। ब्रह्मणः स्वरूपभूतगुणाः जीवजगद्विलक्षणाः सातिशयस्वरूपस्वगुणाः अङ्गीकृताः। ''**इहेदं नान्यत्र**'' ''**इदमिदानीं नान्यदेति**'' देशकालपरिच्छेदराहित्यं तैरङ्गीकृतम्। ''**इदं इदं नेति**'' परिच्छेदानर्हत्वलक्षणं सर्ववस्तुसामान्याधिकरणार्हत्वं वस्त्वपरिच्छेदः। समाभ्यधिकराहित्यनिदानभूतो गुणैर्निरतिशयप्रकर्षो वस्त्वपरिच्छेदः इत्युक्तं भवति'' इति व्यासार्यैः व्याख्यातम्।

**अत्रादुः द्वैतिनः**

ब्रह्मणि ज्ञानकर्तुत्वाङ्गीकारेऽपि ज्ञानरूपक्रियावेशात्मकविक्रियायाः विनाशादिहेतुत्वं न। यतो विक्रिया द्विविधा यावद्द्रव्यभाविनी अयावद्व्यभानिनी चेति। तत्र अयावाद्द्व्यभाविनी। विक्रिया विना शापादिका भवति। अर्थात् सान्तत्वापादिका भवति। या तु, यावद्द्व्यभाविनी विक्रिया सा न विनाशापादिका अर्थात् सान्तत्वापादिका न। अत ''सत्यं ज्ञानमनन्तमि''त्यत्र ज्ञानशब्देन ज्ञानकर्तृत्वार्थाङ्गीकारेऽपि ब्रह्मणः अनन्तत्वोपपत्तिः। तदुक्तं **जिज्ञासाधिकरणसुधायाम् ह्नह्न**

---

४. वि.को. पृ. १७५

[5]**''क्रियावेशादिरूपाया विक्रियाया विनाशाद्यहेतुत्वस्य वक्ष्य-माणत्वात्''** इति।

देशकालानन्त्यविषये प्रायः अभिप्रायभेदो नास्ति। तत्रापि देशकालसत्यतां तद्भिन्नतां च वदन्ति ब्रह्मणः। ब्रह्मणस्तयोः नियामकत्वमपि वदन्ति। देशकालावपि जडौ परस्परवर्तिनौ।

देशो नाम आकाशः द्विविधः भूताकाशः अव्याकृताकाशश्चेति। तथा प्रमाणसद्भावात्।[6]

यत्र श्रुतौ आकाशस्य सम्भूतिरुक्ता सा भूताकाशस्य अपरं अव्याकृताकाशं चतुर्दशभुवनाद्बहिरपि व्याप्तम्। तस्यापि उत्पत्तिः पराधीनविशेषावाप्तिरूपा। तस्याभिमानिनी रमा।

**यथोक्तम् [7]''कालश्चैव दिशो वेदाः प्रकृत्यात्मान ईरिताः।'' मां.भा.**

वस्तुतः आनन्त्यं अद्वैतरीत्या यदुक्तं तत् प्रमाणसङ्कुलविरोधि स्वव्याहत्यादिदुष्टं च। अद्वैतरीत्यैव तत्प्रक्रिया न साधुः। तथाहि । वस्तुतः अपरिच्छेदो नाम वस्तुतः अभेद इति न। यतो हि वस्तुतः परिच्छिन्नत्वात् परिच्छिन्नवस्तुभ्यः ब्रह्मणः भेदाभावे अपरिच्छिन्नत्वं भग्नं स्यात्। अर्थात् परिच्छिन्नत्वमेव स्यात्।

किं च परिच्छिन्नशब्दस्य भिन्न इत्यर्थे प्रयोगाभावात् (प्रमाणाभावात्)। अतस्तदर्थः परित्याज्य एव। तस्मात् वस्त्वानन्त्यं नास्त्येव। किं तु ब्रह्मणि गुणानन्त्यमङ्गीकार्यम्।

---

५. ष.सु. १.पृ. ३५६ ६. म.सि.सा. पृ. १००, १०५

७. उ.प्र.भा. पृ. ९३

## २. ''विष्णोर्नुकं'' श्रुत्यर्थः

ब्रह्मणो गुणपूर्णता सदागमैरेव ज्ञायते नत्वन्यैः। पूर्वत्र बहूनि प्रमाणानि श्रुतिस्मृतिरूपाणि उदाहृत्य परामृष्टम्। अत्रापि विष्णोर्नुकं श्रुतिं तद्व्याख्यानपुरस्सरं स्मर्यते। अस्याः श्रृत्याः सायणभाष्यं, परिशिष्टे दत्तम्।

**विष्णोर्नु कं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजांसि।**
**यो अस्कभायदुत्तरं सधस्थं विचक्रमाणस्त्रेधोरुगायः।।**

ऋ.मं. १-सू. १५४-१

इयं श्रुतिः ऋग्वेदसंहितायां एकशताधिकचतुःपञ्चाशत्सूक्ते पठिता। अस्याः [१]सायणाचार्यव्याख्यानं द्वैतव्याख्यानं[२] च लभ्येते। तत्र सायणभाष्ये विष्णोः वीर्याणि वीरकर्माणि पार्थिवानि पृथिवीसम्बन्धीनि भूमेरूर्ध्वं अधस्तात् लोकान् उत्तरं सत्यलोकं सृष्ट्वा अस्कभायत् स्थापितवान् किं कुर्वन् त्रेधा विचक्रमाणः त्रिप्रकारं स्वसृष्टान् लोकान् क्रममाणः। उरुगायः उरुभिः महद्भिः गीयमानः अतिप्रभूतं गीयमानो वा। य एव कृतवान् तादृशस्य विष्णोर्वीर्याणि प्रवोचम्। इत्यभिप्रायतः व्याख्यातम्। यास्कनिरुक्तं मन्त्रान्तरादिप्रमाणपुरस्सरं उदाहृत्य व्याख्यातं सायणाचार्यैः।

तथापि इतोऽप्यतिरोचनीयं वेदान्तकृद्वेदविदभिप्रायान्तरं अस्तीति द्वैतव्याख्यानावलोकनेन स्पष्टीभविष्यति। तत्किं।

वेदव्याख्यानं **''इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्'' इति ''भारतवचनात्''** अत्रापि एवं कृतं चेत् विष्णुमहिमातिशयः ज्ञातुं शक्यः। अस्तु किं तत् इतिहासपुराणवचनं येनेमां श्रुतिं व्याख्यातुं सुकरं भवेत्? उच्यते। उक्तं च द्वितीयस्कन्धभागवते

---

१. सा.भा. पृ. ९२९ सायणभाष्यम्    २. भा.दी. (१) पृ. १२९

[3]''**विष्णोर्नु** [*]**वीर्यगणनां कतमोर्हतीह यः**

**पार्थिवान्यपि कविर्विममे रजांसि।**

[4]**चस्कम्भ यः स्वरभासा स्वलितं त्रिपृष्टं**

**यन्मा निशम्य सदनादुरुकम्पमानम्॥''** इति भा. II 7-40

चतुर्मुखब्रह्मणोक्तमिदं नारदाय भगवन्महिमावर्णनं केनपि अशक्यमिति। तद्यथा।

वामनो यदा त्रिविक्रमो भूत्वा स्वर्गादिलोकानाक्रम्य सत्यलोकमपि स्वपदा कम्पयामास तद्रभसेन सत्यलोकोऽपि चलितः, तदा स एव त्रिविक्रमः तं चस्कंभ स्तम्भितवान्। तस्य विष्णोः वीर्यगणनां वीर्योपलक्षितगुणगणनां, आदिकविः ब्रह्मापि महाप्रतिभासम्पन्नोऽपि पार्थिवानि रजांसि भूमिपरमाणून् गणितवानपि, नैव अर्हति गणितुं शक्नोति इति अस्य सुगमोऽर्थः। तमेवार्थं श्रुतिरपि उपादत्ते इत्यत्र न काप्यनुपत्तिः। यद्यपि सायणभाष्येऽपि विष्णुमहिमैवोक्तः। तथापि तत्र केवलं सृष्टिपालनादिकतिपयगुणा एव उक्ताः। अत्र तु द्वैतव्याख्याने विष्णोरनन्तगुणलाभरूपार्थः लभ्यते। तस्मात् अयमेवशक्यपूर्णार्थ इति वयं भावयामः। नास्माभिः सायणकृतार्थाः तिरस्कृताः। किं तु बह्वर्थलाभार्थं कतिपयार्थानपि स्वीकृत्य अन्यानपि अर्थान् स्वीकर्तव्यमिति मन्यामहे। बह्वर्थेषु कतिपयार्थानामन्तर्भावात्। विष्णोरनन्तगुणसाधनं को नाम न सिषाधयति।

---

३. भा.टी.वि. पृ. ३४२ ४. भा.टी.श्री. (२) पृ. १८

* वीर्यशब्दस्य ''गुण'' इत्यप्यर्थः दृश्यते चक्रवर्ति श्रीनिवास गोपालाचार्याणां संस्कृत-कन्नड- शब्दकोशे (१९९९ पञ्चमसम्पुटे - २४८७ पृष्ठे ''प्रभावः, गुणः, परिणामकारित्वं, कार्यकारित्वं'' इति॥

३,४. विजयध्वजीय श्रीधरीयव्याख्याद्वयमपि परिशिष्टे दत्तम्। पृ.

## ३. बृहतीसहस्रऋचां विष्णुसहस्रनामार्थानुसन्धानम् तत्रापि अनन्तयुक्तनाम्नाम्

ऐतरेयोपनिषत् ऋग्वेदैतरेयारण्यके पठिता। अस्यामेव द्वितीयारण्यके द्वितीयप्रघट्टके सप्ताध्यायाः तृतीयारण्यके द्वावध्यायौ स्तः। तत्र द्वितीयारण्यके द्वितीयतृतीयाध्याययोः इन्द्रेण[१] महान्तं विष्णुमुद्दिश्य स्वपदवीस्थैर्याय महाव्रतमेकं अकारि। तेनेन्द्रो महानास। तदेतदुक्तं ''वृत्रं[२] हत्वा महानास'' इति श्रुतौ। इन्द्रकृतमहायागे विश्वामित्रः होता, भृगुरध्वर्युः, स्वयं चतुर्मुखः ब्रह्म, वायुरुद्गाता आसन्। नारायणस्तु सादस्यमकरोत्। तदा विश्वामित्रः विष्णोरतिप्रियान्नं बृहतीसहस्रं इन्द्रसन्निधौ त्रिवारं पठित्वा, इन्द्रस्य तद्गतवायुविष्ण्वोः अनुग्रहं प्राप्य मुक्तावपि विष्णोरन्तःपुरप्राप्तिरूपविशेषफलं प्रापेति एतरेयभाष्यगारुडवचनात् ज्ञायते।

तदेतत् बृहतीसहस्रं परममुख्यवृत्या विष्णुं प्रतिपादयति तदनन्तरं तत्प्रतिमात्वात् वायुं प्रतिपादयति इति भाष्यादिवचनैरवगम्यते।

बृहतीसहस्रं खलु ऋग्वेदीयविविधछन्दोबद्धऋक्सहस्रमेव। ऋग्वेदे तावत् सहस्रसंख्याकाः बृहतीछन्दस्काः मन्त्रा न सन्ति। तथापि एतरेयारण्यकोक्तप्रकारेण सम्पादितानां तेषां सहस्रत्वं समुचितं भवति।

बृहतीछन्दसि षट्त्रिंशदक्षराणि भवेयुः। बृहतीछन्दसां मन्त्राणां न्यूनत्वेन इतरेषां छन्दसां ऋचः अपि सङ्गृह्य बृहती सम्पादिता भवति।

[३]श्रीशेषचन्द्रिकाचार्याणां बृहतीसम्पादनपरिशीलनेन षट्त्रिंशदक्षरनियमो नोपलभ्यते। श्रीरघुनाथतीर्थैः स्वसम्पादितबृहतीसहस्रविषये एवमभिप्रेतम्।

**''न हि वयं बृहतीछन्दसां प्रविष्टत्वात् बृहतीसहस्रसंज्ञां ब्रूमः। अपि**

---

१. उ.प्र.भा. पृ. १९१-१९५ (ऐ.भा.)
२. म.ता.नि. पृ. ४५५ (म.ता.नि.)
३. बृ.स.शे. पृ. (२) (३)

**तर्हि ''तदिदासेत्या''दिना विहितानां ''परिधानीया''न्तानां षट्त्रिंश-दक्षराण्येकामृचं विधाय बृहतीमनुसंधाय एवं सहस्रबृहतीः सम्पाद्य शंसितासु पञ्चचत्वारिंशदधिकशतोत्तर-सहस्रसंख्यासु ऋक्षु बृहती-सहस्रसंज्ञां कुर्म''** इति।

तथा **''तत्राष्टादशाक्षराण्येकमर्धं सम्पाद्यार्धद्वयस्य षट्त्रिंशदक्षरत्व-सम्पादनेनैकां बृहतीं सम्पाद्यैवमवशिष्टषट्त्रिंशदक्षराण्यप्यर्धद्वयं विधाय परां बृहतीं सम्पादयेत्''** इति च।

श्रीरघुनाथतीर्थैः स्वयं सम्पादितबृहतीसहस्राणां व्याख्यानं **तत्वसारः** उपलभ्यते।[४]

[५]श्रीभगवन्तरायैः अनुसृतपाठस्तु श्रीवेदेशतीर्थसम्पादितत्वेनाभिमतः पाठः यः पाङ्ग्री आचार्यैः प्रकाशितश्च। उभयोरपि व्याख्यानयोः विष्णुसहस्रनामवाचकमन्त्रेष्वपि व्यत्यासः दृश्यते।

बृहतीसहस्रं ऋक्समुदायं विष्णुसहस्रनामार्थोपेतमिति एतरेयादवगम्यते। यथोक्तम्[६]

**''तदेतत् सहस्रं तत् सर्वम्''** । (द्वितीयारण्यकं - अ.३)

तत्र भाष्ये च

**''विष्णोः सहस्रनाम्नां तु यत्तद्रूपसहस्रकम् ।**
**बृहतीसहस्रमेतच्च तद्व्यक्तिर्हि पृथक् पृथक् ।**
**पृथक् पृथगिह नामार्थऋच एकाः प्रकीर्तिताः।**
**सर्वनामात्मकं तस्मात् ऋक्सहस्रमिदं हरेः।''**

**अयं भावः-** भीष्मयुधिष्ठिरसंवादात्मके विष्णुसहस्रनामस्तोत्रे यानि नामानि विश्वविष्ण्वादीनि उपदिष्टानि तान्येव बृहतीसहस्रऋचः प्रतिपादयन्ति।

---

४. बृ.स.शे.पृ. १-४५७

५. बृ.स.शे. पृ. तखखख ; बृ.स.श.पां. पृ. ४ ६. उ.प्र.भा. पृ. २२१-२२३

सहस्रशब्दः अनन्तवाची। तस्मात् एतद्बृहतीसहस्रमपि हरेः अनन्तरूपाणि प्रतिपादयति। अनन्तरूपपठने जनानां अशक्यत्वात् तेषामुपकारार्थं विष्णुसहस्रनामस्तोत्रं भारते प्रत्येकतया प्रस्तुतम्। इदमेव पुरस्कृत्य श्रीशेषचन्द्रिकाचार्याः भगवन्तरायमहोदयाश्च बृहतीसहस्रं व्याख्यातवन्तः। अनन्त इति शब्दः द्विवारं अनन्तयुक्तशब्दश्च चतुर्वारं स्त्रोत्रे आहत्य षड्वारं दृश्यते। एतदर्थकबृहतीसहस्रऋचस्तु व्याख्यानकारैः प्रत्येकं विभिन्नतया व्याख्याताः। उभयव्याख्यानुसारेण बृहतीसहस्रऋगुक्तनामार्थलेशास्तु अत्र सङ्गृहीताः।

**शेषचन्द्रिकाचार्याणां व्याख्यानुसारि-अनन्तादिशब्दार्थाः**

(१) ‘‘**वीरोऽनन्तो धनञ्जयः**’’ इति सहस्रनाम्नि अनन्तशब्दार्थः ‘‘**वसूदिद्विपति**’’ इति ऋचि इन्द्ररूपिभगवतः अव्याहतसङ्कल्पाख्य-गुणप्रतिपादनेन नाशरहित-सङ्कल्पत्वात् अनन्त इत्यर्थः प्रतिपादितः।[७] (ऋङ्मन्त्रः ६७३)

(२) ‘‘**अनन्तो हुतभुग्भोक्तेति**नामसमन्वितऋचि ‘‘**गोमतः। यत् सीमुप.......** ‘‘इत्यत्र असुराहृतगोग्रहणार्थगमनवत् - इन्द्ररूपि-हरिरितिप्रतिपादनात् अनन्तइत्यर्थो व्याख्यातः। (अनं गमनं तनोतीति अनन्तः द्वितीयाया अलुक।[८] (ऋङ्मन्त्रः ८९१)

(३) ‘‘**सहस्रजिदनन्तजित्**’’ इत्यत्रोपकल्पितमन्त्रे ‘‘**शं पदं मदं......**’’ इत्यत्र इन्द्रनामकविष्णुः अनन्तैश्वर्यवान् इत्यर्थः व्याख्यातः।[९] (ऋङ्मन्त्रः ३१३)

(४) ‘‘**अनन्तात्मा**’’ इति नामार्थप्रतिपादकमन्त्रे ‘‘**सव्यामनु**’’ इत्यत्र भक्तेषु कोपाभावात् दानशीलत्वाच्च अनन्तात्मेन्द्रनामकविष्णुरिति अर्थः

---

७. वृ.स.शे. पृ. ३१५

८. बृ.स.शे. पृ. ४०९

९. बृ.स.शे. पृ. १५४

व्याख्यातः। (ऋङ्मन्त्र ५२८) **''सेहे तमीश उतभक्तिमतोऽपराधं''** इति काळीयं प्रति कृष्णस्य क्षमागुणः, बलिं प्रति इन्द्रपदवीदानशीलत्वात् अनन्तात्मेति कोपाभावदानशीलगुणाः हरौ दृष्टाः॥[१०]

(५) **''अनन्तरूपः''** इति नामप्रयोक्तृमन्त्रे **''के अप्सु''** इत्यत्र इन्द्ररूपिब्रह्मणः भुवि, विश्वेषु सवनेषु रूपान्तरैः, यज्ञे अपरेण रूपेण, अशेषप्राणिनः बलदः सन् अनन्तरूपप्रतिपादनं कृतम्। तत्सर्वं **''ब्रह्मणा महानि''**त्यादिना सूचितम्।[११] -ऋङ्मन्त्रः ९३५

(६) **''अनन्तश्रीः''** इति नामप्रतिपादकमन्त्रे **''विश्वस्मिन् भरे''** इत्यत्र विश्वचर्षणशब्दवाच्ये इन्द्ररूपिहरौ **''विश्वस्मिन् भरे ज्येष्ठ''**इत्यादिना अनन्ताः श्रियः द्योत्यन्ते। ज्येष्ठ इत्यनेन शोभावत्वं **''महीं ओमात्रान्''** इत्यनेन शोभां सज्ञनाः विदुरित्यादिव्याख्यानेन ज्ञायते।[१२] (ऋङ्मन्त्रः ९३६)

**श्रीभगवन्तरायानां व्याख्याने अनन्तादिनाम्नां बृहतीसहस्रोक्तव्याख्या-लेशसंग्रहः**

(१) **''वीरोऽनन्तो धनन्जयः''** इत्यत्रोपकल्पितबृहतीमन्त्रे **(६६०-''वद्धवं वसूयवो वसुपतिं शतक्रतुं स्तोमैरिन्द्रं'')** इत्यत्र अनन्तस्तोत्रवान्, पापदारिद्र्यादिदोषशून्यानन्तभक्तवान् इति अर्थो कृतः।[१३]

(२) **''अनन्तो हुतभुग्भोक्ता''** इति नामसमन्वितमन्त्रे अनन्तैश्वर्य-नियामकत्वं, अनन्तवेदवत्वं, वेदैः साकल्येनाप्रतिपादकत्वं अनन्तकाम-दातृत्वरूपाः **(ऋङ्मन्त्रः ८८८)** चत्वारो अर्थाः उक्ताः॥[१४]

---

१०. बृ.स.शे. पृ. २५०
११. बृ.स.शे. पृ. ४२९
१२. बृ.स.शे. पृ. ४२९-४३०
१३. बृ.स.भ.रा. पृ. ५००
१४. बृ.स.भ.रा. पृ. ६६०

(४) ''**सहस्रजिदनन्तजित्**'' इत्यर्थबोधकमन्त्रे ''**जसातये त्वंह्येकं**'' इत्यत्र अनन्तजीवपराभवशीलवत्वं, स्वस्याभिभवाभाववत्वं, जेत्रभाववत्वं वा, अनन्तपदार्थजयशीलत्वं, तेषां मनसा प्रापणशीलवत्वं, अखिलपदार्थज्ञानवत्वं सर्वज्ञत्वं इत्यादयो गुणाः प्रतिपादिताः।[१५] (ऋङ्मन्त्रः ३१०)

(४) ''**अनन्तात्मा**'' इति अर्थापादकमन्त्रे ''**भ्यो वृत्रं धनुभ्यो ...**'' इत्यत्र हरेः अनन्तसंख्याकासुरसंहारकर्तुत्वं, अज्ञानकामादिदोषनाशकत्वं, अनन्तमेघप्रवर्तकत्वं, अनन्ताग्निसूर्यादिदेवप्रवर्तकत्वादयो गुणाः प्रतिपादिताः।[१६] (ऋङ्मन्त्रः ५७८)

(५) ''अनन्तरूप'' इतिनामप्रतिपादकमन्त्रे ''जकृत्येषु सत्पते'' इत्यत्र अन्तर्यामी सन् अनन्तकर्मनिवर्तकत्वं, सर्वहृदयस्थाने सर्वपूज्यत्वादिकं निरूपितम्।[१७](ऋङ्मन्त्रः ९३३)

(६) ''अनन्तश्रीः'' इति नामप्रतिपाद्यमन्त्रे ''इयक्षान् के ते'' इत्यत्र अनन्तवेदानां आश्रयत्वात् वेदप्रमाणसिद्धत्वात् अनन्तश्रीर्नारायणः इति निरूपितम्।[१८] (ऋङ्मन्त्रः ९३४)

एवं व्याख्यानद्वये पठिताः विष्णुसहस्रनामवाचकमन्त्रा अपि भिन्नाः सम्प्रदायभेदात्।

---

१५. बृ.स.भ.रा. पृ. २४७

१६. बृ.स.भ.रा. पृ. ४०७

१७. बृ.स.भ.रा. पृ. ६९३

१८. बृ.स.भ.रा. पृ. ६९४

१३-१८. श्री आनन्दतीर्थमाळिगी महोदयानां विद्यावारिधिपदवीप्रबन्धस्य पृष्ठाः। पुस्तकं अप्रकटितम्। तेषां पि.हेच् डि. उपाधिः प्राप्ता।

## ४. गीतायां अनन्तशब्दार्थः

भगवद्गीतायां अनन्तशब्दः बहुवारं पठितः। तस्य मतत्रयानुसारिव्याख्यान-मस्मिन् प्रकरणे विचार्यते।

अनन्तशब्दः त्रिवारं पठितः तद्यथा।

**(१) ''अनन्तश्चास्मि नागानां'' (१०-२९)**

**(२) ''सर्वाश्चर्यमयं देवमनन्तं'' (११-११)**

**(३) ''तेजोमयं विश्वमनन्तमाद्यम्'' (११-४७)** इति

तत्र प्रथमे (१०-२९) **''नागविशेषाणां मध्ये नागराज अनन्त''** इत्यत्र [१]**''अद्वैतन्याख्याने'',** [२]विशिष्टाद्वैतभाष्ये च **''नागाः बहुशिरसः''** इतिमात्रं, [३]राघवेन्द्रतीर्थगीताविवृतौ **''नागानां अनेकशिरसां देशकालगुणानन्त्यहेतुना अनन्तनामा शेषगतः''** इति व्याख्यातम्। द्वैतव्याख्यानं विभूतिरूपं भगवतः स्पष्टं प्रादर्शीति मन्ये।

[४]द्वितीयानन्तशब्दस्य अन्तराहित्यं अद्वैतभाष्ये, देशकालपरिच्छेदानर्हत्वं विशिष्टा-द्वैतव्याख्याने, [५]देशकालगुणापरिच्छिन्नत्वं गीताविवृतौ [६]प्रदर्शितं स्वमतप्रक्रियानुसारेण।

[७]तृतीयानन्तशब्दस्य पूर्ववदेव अद्वैतविशिष्टाद्वैतभाष्ययोः [८]द्वैतभाष्ये तु देशकालापरिच्छिन्नत्वेन व्याख्यातम्।

(१) अनन्तयुक्तशब्दस्तु गीतायां त्रिवारं पठितः। तद्यथा

---

१. शां.गी.भा. पृ. २५५
२. रा.गी.भा. पृ. ३४६
३. गी.वि. पृ. १८२
४. शां.गी.भा. पृ. २६३
५. रा.गी.भा. पृ. ३६०
६. गी.वि. पृ. १९०
७. शां.गी.भा. पृ. २८०/ रा.गी.भा. पृ. ३८९
८. गी.वि. पृ. २०१

**''अनेकबाहूदरवक्त्रनेत्रं पश्यामि त्वां सर्वतोऽनन्तरूपम्।**
**नान्तं न मध्यं न पुनस्तवादिं पश्यामि विश्वेश्वर विश्वरूप॥''**

(११-१६)

(२) **''अनादिमध्यान्तमनन्तवीर्यं अनन्तबाहुं शशिसूर्यनेत्रम्।''(११-१९)**

(३) **''मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये।**
**यततामपि सिद्धानां कश्चिन्मा वेत्ति तत्त्वतः ॥'' (७-३)**

एतेषां श्लोकानां [९]अद्वैतव्याख्याने भगवतो अनन्तरूपवत्वेन अनन्तबाहुत्वेन मध्यशून्यत्वादिकं व्याख्यातम्। तृतीयश्लोकव्याख्यानेऽपि कश्चिदेव यतते, न सर्वे इति अभिप्रेतम्।

[१०]विशिष्टाद्वैतव्याख्याने **''अनवधिकातिशयज्ञानबलैश्वर्यशक्तितेजसां निधिं''** इति व्याख्याय गुणपूर्णत्वं साधितमिति भाति) अवशिष्टं पूर्ववदेव। तृतीयश्लोकव्याख्यानावसरे **''मनुष्याः शास्त्राधिकारयोग्याः तेषु सहस्रेषु कश्चिदेव सिद्धिपर्यन्तं यतते। यतमानानां सहस्रेषु''** इत्यादि व्याख्यातम्।

[११]माध्वभाष्ये तु

प्रथमश्लोके **''अनेक विश्वशब्दयोः''** अनन्तवाचित्वमर्थं अभिधाय प्रमाणमुदाहृतम्। स एव विशेषः। **''सर्वं समस्तं विश्वमनन्तं पूर्णमेव च''** इति अभिधानात् इति।

**''परात्परं यन्महतो महान्तं यदेकमव्यक्तमनन्तरूपं''**

**''इति यजुर्वेदे''** इति श्रुतिप्रमाणमुदाहृत्य विशेषोऽर्थः प्रकटितः। **''अव्यक्ततत्वस्य अनन्तत्वादेव महत्वे अपरिमितत्वं सिध्यति''** इति गीता-वाक्यस्य इतोऽपानेकार्थाः प्रदर्शिताः इतरभाष्यदृष्ट्या इति तदवगाहनेन ज्ञायते।

---

९. गी.भा. पृ. १९७, २६५, २६६ 
१०. गी.भा. पृ. २४५, ३६३, ३६५, ३६६
११. गी.भा. पृ. ३३८ (गी.ता.) १७९-१८१ (गी.भा.) ३७३ (गी.ता.)

तृतीयश्लोके पुनः मनुष्याणां सहस्रेषु इत्यत्र जीवानन्त्यप्रमेयं प्रतिपादितम् स्कान्दवचनोदाहरणेन। **''अनन्तानां तु जीवानाम्''** इत्यादिना। अत्र यद्यपि मानुष्या एव लक्षिताः शब्दतः। तथापि मोक्षार्थं न केवलं मनुष्याः यतन्ते किं तु आब्रह्मस्तम्भप्रर्यन्तमुक्तियोग्या इत्यभिप्रायेण मनुष्योपलक्षितसर्वे मुक्तियोग्यजीवा यतन्ते इति व्यवस्थित्कविकल्पमनुसृत्य विशेषार्थः प्रदर्श्य गीताचार्यहार्देमेव अनावृतमाचार्यपादैः इति तत्कौशलं ज्ञायते।

एतद्भाष्यावगाहनार्थं तद्यथावत् मतत्रयभाष्याणि परिशिष्टे-१३ (पृ. २५३-२५६) प्रदर्शयिष्यन्ते।

## ५ विष्णुसहस्रनामस्तोत्रे अनन्त इति शब्दः, अनन्तयुक्त शब्दः, तेषामर्थाः।

विष्णुसहस्रनामसु अनन्तशब्दः बहुवारं पठितः। तस्य मतत्रयानु-सारिव्याख्यानमस्मिन् प्रकरणे विचार्यते।

अनन्तशब्दः द्विवारं

**''वीरोऽनन्तो धनञ्जयः''** **(८३)**

**''अनन्तो हुतभुग्भोक्ता''(१०८),**

अनन्तयुक्तशब्दस्तु चतुर्वारं

**''सहस्रजिदनन्तजित्'' (४६),**

**''अम्भोनिधिरनन्तात्मा'' (६८),**

**अनन्तरूपो (११३),**

**अनन्तश्रीः (११३)**

इति श्लोकेषु क्रमतः पठितः। विष्णुसहस्रनामस्तोत्रस्य शाङ्करभाष्यमस्ति। रामानुजमाध्वमतानुसारिव्याख्यानान्यपि सन्ति। एतेषां पर्यालोचनया व्याख्यानविशेषाः विप्रतिपत्तयः एवं गोचराः भवंति। ते यथा।

द्विवारं पठितानन्तशब्दस्य मतत्रयव्याख्याने देशकालव्याप्तिमत्व-

मङ्गीकृतम्। [1]शाङ्करभाष्ये तु वस्तुतोऽपरिच्छिन्नत्वं वस्त्वभेदं ब्रह्मणि प्रतिपादयितुं व्याख्यातम्। **''सत्यं ज्ञानमनन्तं ब्रह्मेति'' श्रुतिबलात् (वीरोऽनन्तो धनञ्जयः इत्यत्र)।** [2]रामानुजव्याख्याने वस्तुतः अपरिच्छिन्नत्वं गुणानन्त्यं निरवधिकत्वमभिप्रेत्य व्याख्यातं न तु वस्तुतो ब्रह्मणश्च अभेदमाश्रित्य। [3]माध्वव्याख्याने तु अनन्तशब्दनिर्वचनार्थं श्रुतिप्रमाणमुदाहृतम्।

**''यत्तन्नोपलभ्यते तिर्यगूर्ध्वमधस्तात् तस्मादुच्यते ''अनन्त'' इति श्रुतेः''**।। (वि)

अन्यत्रपठित **''अनन्त''** शब्दस्य (१०८) [4]शाङ्करव्याख्याने (तद्विवृतौ) विष्णुपुराणमुदाहृत्य गुणानन्त्यं समर्थितं यत् अद्वैतस्यापसिद्धान्तत्वं स्ववचनविरोधादिकं निग्रहस्थानं प्रापयति। माध्वव्याख्याने देशकालगुणपरिच्छेदाभावमभिप्रेत्य व्याख्यातम्। [5]अविनाशित्वं [6]च।

अनन्तशब्दयुक्तेतरशब्दानां (४६, ६८, ११३, श्लोकेषु अनन्तजित्, अनन्तात्मा, अनन्तरूपो, अनन्तश्रीः शब्दानां) [7]सर्वप्राणिजयत्वादिकं[8], शेषस्यान्तर्यामित्वादिकं, [10]असंख्यातरूपसम्पादादिकं प्रायः सर्वव्याख्यानेषु दृश्यते। माध्वव्याख्याने मुक्ताश्रयत्वं[9] विष्णोः प्रतिपाद्य (अनन्तात्म शब्दस्य), मुक्तानां परमगतित्वं यदुक्तं स्तोत्रे पूर्वं तदत्र अनुसन्धत्तम्।

एवं मत्तत्रायभिसन्धीन् विमृश्य तेषां व्याख्यानानि यथावत् परिशिष्टे-१४ (पृ. २५६-२५१) दत्तानि।

---

१. वि.स.शां.भा. पृ. ४४५ | २. वि.को. (१) पृ. १७४

३. वि.वि.व्या. पृ. ९९ | ४. वि.स.शां.भा. पृ. ५५६

५. वि.वि.व्या. पृ. १२१ | ६. स.वि.भा. पृ. १०२, १०३

७. वि.स.शां.भा. पृ. २८६ / वि.को.(१) रा. पृ. १७५ / वि.वि.व्या. पृ. ६४

८. वि.को.(१) रा. पृ. १७९ / स.वि.भा. पृ. ६२ | ९. स.वि.भा. पृ. ६२

१०. स.वि.शां.भा. पृ. ५७९ / वि.को.रा. १७७, १७८ / वि.वि.व्या. पृ. १२५ / स.वि.भा. पृ. १०७

## ६. भागवतस्थकतिपयश्लोकस्थानन्तशब्दार्थाः

श्रीमद्भागवते अनन्त इति शब्दयुक्ताः शब्दाः शतशः सन्ति। तेषामुदाहरणानि प्रबन्धस्य प्रथमाध्याये [१]अर्थैः सह प्रदर्शितानि (कानिचित्)। विष्णोनृकं श्रुत्यर्थावसरे संवादरूपेण [२]''**विष्णोर्नु वीर्यगणानां**'' इति भागवतश्लोकोदाहरणं प्रादर्शि।

अधुना हरेः अनन्तगुणप्रतिपादकानि कानिचित् भागवतवाक्यानि अनन्तशब्दयुक्तानि अर्थैः सह प्रदर्श्यन्ते।

१) प्रजापतिकृताधोक्षजस्तोत्रे षष्ठस्कन्धे ''**तस्मै नमो अनन्तगुणाय भूम्ने**'' इत्युक्तम्। अस्य भागस्य श्रीधरीयव्याख्यानं विजयध्वजीयव्याख्यानं वा नास्ति। (६)-४-३१।[३]

परं तु द्वैतसम्प्रदायानुसारिसत्यधर्मतीर्थीयव्याख्याने [४]विशेषार्थाः दृश्यन्ते। तद्यथा ''**अनन्तगुणाय भूम्ने**'' इत्यत्र भूम्ने इति शब्दस्य ''**पूर्णगुणाय**'' इति प्रसिद्धार्थेन सह ''**व्याप्ताय**'' इत्यर्थो व्याख्यातः। ''**अनन्तगुणाय**'' इति शब्दस्य

(१) अपरिच्छिन्नगुणाय इति प्रसिद्धोऽर्थो व्याख्यातः।

(२) अनन्तशब्दस्य ''**आकाशः**'' इति अर्थसद्भावात् **अनन्तगुणः शब्दः। तेन अय्यन्ते अवगम्यंते अनन्तगुणयाः श्रीब्रह्मादयः तेषां तेषु वा भूमा ज्यायांस्तस्मै नमः।**'' तथा च श्रीशेषब्रह्मशङ्करेभ्योऽपि महामहात्म्यवते विष्णवे इति विशेषार्थो प्रदर्शितः सत्यधर्मीयव्याख्याने।

२) **मय्यनन्तगुणेऽनन्ते गुणतोऽनन्तविग्रहे(अनन्तविग्रहः)**[५A]पा.६-४-४८

इत्यत्र श्रीधरीयव्याखायाम्[५]

---

१. पृष्ठे ......
२. भा.टी.वि. ३४२
३. भा.पृ. ३२५
४. भा. ४ पृ. ३०३-३०४
५A. पा. (अद्वैत)
५. भा. ६ पृ. ५९० ;

**''गुणतो मायातः । गुणमयो विग्रहो ब्रह्माण्डम् ।। ततस्तदैव अजोऽयोनिजः।''** इति।। विजयध्वजीये तु[६]

**''अनन्तगुणे असंख्यातगुणे। गुणतो अनन्ते प्रत्येकशोऽप्यसंख्याते। अनन्तविग्रहे असंख्यातरूपे''** इति दृश्यते। इदं तु भागवततात्पर्यरीत्या प्रादर्शि।

इदमत्र चिन्त्यम्

**''मयि अनन्तगुणे, मयि अनन्तविग्रहे''** इति सुस्पष्टमूलवाक्यस्य श्रीधरीयव्याख्यानं कथं सुसङ्गतं भवति इति न जानीमः द्वैतव्याख्यानं विना। मुख्यार्थत्यागः नातिसुन्दरः। अत्र भागवततात्पर्ये भगवत्पादैः तन्त्र-भागवताख्यप्रमाणमुदाहृत्य व्याख्यातं मूलश्लोकं स्पष्टत्वेऽपि - अनन्त-गुणप्रतिपादनाय। तस्मात् द्वैतव्याख्यानस्य वैशिष्ट्यं स्फुटमिति ज्ञायते।

(३) [७]**जन्मकर्माभिधानानि सन्ति मेऽगं सहस्रशः।**[७(१)]
**न शक्यन्तेऽनुसंख्यातुं अनन्तत्वान्ममापि हि।।**

***कश्चिद्रजांसि विममे पार्थिवान्युरुजन्मभिः।**
**गुणकर्माभिधानानि न मे जन्मानि कर्हिचित्।।**

-[७(२)]भा.१०-५१-३७, ३८ (पा.)

श्लोकद्वयमिदं दशमस्कन्धे मुचुकुन्दस्तोत्रप्रीतमनसः कृष्णस्य मुचुकुन्दराजं प्रति इति दृश्यते।

अत्र प्रथमश्लोकस्य (३७), श्रीधरीयविजयध्वजीयव्याख्ये न स्तः प्रतीकग्रहणेन। परं तु उभयव्याख्यानयोरपि उत्तरश्लोकस्य (३८) प्रथमश्लोकार्थमपि मनसि निधाय व्याख्यातमिति भाति।

---

६. भा.टी.वि. ६. पृ.५०    ७. भा.टी.श्री. १० पृ. १०९२

७(१) अयं श्लोकः ''विष्णोर्नु वीर्यगणनां....रजांसि....'' इति भागवतस्यैव स्थलान्तरगतं (भा. २-७-४०) श्लोकं, ''निष्णोर्नुकं वीर्याणि''(ऋ १-१५४-१) इति श्रुतिं च स्मारयति।

७(२) (पा)

श्रीधरीये ''क्वचित् कदाचित् कश्चित् यद्यापिराजांस्यपि विममे गणितवांस्तथापि जन्मानि कर्माणि न विमिमीते ''इति व्याख्यातम्।

[८]विजयध्वजीये तु भगवतो **''अनन्तत्वमाह कश्चिदिति''** इति अवतारिकां कृत्वा **''काश्चित् क व ब्रह्मैव । सोऽपि मे जन्मानि गुणकर्माभिधानानि न विममे''** इति व्याख्या दृश्यते। अत्र **''कश्चित्''** इति शब्देन ब्रह्म गृहीतः। अपरव्याख्याने तु रामान्यतः **''कोऽपि''** इत्युक्तम्।

श्रीधरीयव्याख्यानवैशिष्ट्यं तु **''क्वचित् कदाचित् काश्चित्''** इति विशेषणैः स्थलविशेषाः, त्रिकालं, सर्वचेतनाः अपि व्यावृत्ताः। तेन च न कोपि चेतनः कुत्रापि त्रिकालेष्ववि, भगवज्जन्मानि कर्माणि न विममे गणितवान् इति व्याख्यातमिव भाति। परं **''गुणान्''** इति मूलश्लोकप्रतीकः कुतो न (कण्ठतो) स्वीकृतः इति न ज्ञायते।

विजयध्वजीये तु तत्स्पष्टतयोक्त्या अनन्तगुणजन्मकमाभिधानविषये संशयलेशोऽपि नावशिष्यते।

किं चात्र श्लोके भगवतः जन्मानि इति शब्दस्य **''गुणकर्माभिधानानि''** इति विशेषणं नैव विस्मर्तव्यम् इत्यापि विजयध्वजीयव्याख्यानेन ज्ञायते।

अनेन स्वयं भगवता कृष्णेन स्वस्य गुणानन्त्यं - नामानन्त्यं (अभिधाना-नन्त्यं) जन्मानन्त्यं (अवतारानन्त्यं) कर्मानिन्त्यं (जगत्सृष्ट्यादिव्यापारानन्त्यं क्रियानन्त्यं वा) उद्घोषितमिति तस्योपादेयत्वं सिद्धं भवति।

एवमादिशतशो वाक्यानि भागवतेऽत्यन्तस्पष्टतया भगवद्गुणाभिधायकानि दृश्यन्ते। भगवतो गुणा नाम तस्य शक्तिः, वीर्य, औदार्य, सैन्दर्य, सार्वज्ञ्यं, आनन्दं, रूपं, द्युतिः, बलं, सत्यं, वात्सल्यं, दुष्टशिक्षणं, शिष्टपालनं, व्याप्तिः, नियामकत्वादिगुणाः एव। ईदृशानि अनन्तानि असंख्यातानि सन्ति। अपि च सर्वेऽपि गुणा निस्सीमा इति आचार्यैः प्रतिपादितम्।

---

८. भा.टी.वि. १०. पृ.२५

# ३.६ आनन्त्योपासनम् - अनन्तोपासनम्

सर्वगुणोपेतत्वसमर्थनं कृतं पूर्वत्र। अनन्तगुणपूर्णस्य मोक्षादिसकल-पुरुषार्थदातुः नारायणस्य परोक्षज्ञाने निश्चिते सति किं मया कार्यमिति जिज्ञासाबुद्धिर्जायते। परोक्षज्ञानेन भगवदपरोक्षार्थं उपासा कार्येति शास्त्रमथितार्थः। तदर्थमिदं प्रकरणं आनन्त्योपासनं - अनन्तोपासनं नाम।

## १. उपासापीठिका

सर्वैरपि मुमुक्षुभिः भगवद्दर्शनार्थं स्वरूपानन्दानुभवार्थं च शमदमादिसम्पत्तिं विशेषतः प्राप्य ब्रह्मजिज्ञासार्थं स्वाध्यायं कृत्वा तदर्थनिर्णयाय ब्रह्म-मीमांसाशास्त्रमेवाभ्यसनीयमिति प्रेक्षावतां मतम्। तन्मीमांसाशास्त्रं तु चतुरध्यायात्मकं समन्वय-अविरोध-साधन-फलाध्यायभेदेन। तत्र प्रथमाध्यायद्वयेन नारायणाख्यपरब्रह्मणो सकगुणपूर्णताविषये निश्चयो भवति। एवं ज्ञानवतः तस्य मुमुक्षोः किं मया कार्यमिति जिज्ञासायां साधनाध्यायः ईषणत्रये वैराग्यं, भगवति निर्निमित्तां भक्तिमुपदिशति। एताभ्यां भगवदुपासायां कृतायां ब्रह्मापरोक्षः तत्तदधिकारियोग्यतया भवतीति तृतीयाध्यायसारः।

## २. उपासा - द्विविधा

तत्र भगवदपरोक्षार्थं उपासा कर्तव्या। यः उपास्ते स उपासकः। [१]उपासना नाम ब्रह्मजिज्ञाया। सा द्विविधा सच्छास्त्रश्रवणमननरूपा ध्यानरूपा चेति।

**''सोपासना च द्विविधा शास्त्राभ्यासस्वरूपिणी।**

**ध्यानरूपा परा च''** इति अनुभाष्योक्तेरिति भावः॥ (३)-३-१ त.प्र. भावदीपः

१. त.प्र. (३) पृ. १५५

## ३. विष्णोरेवोपासना

[३]ब्रह्मशब्दस्तु विष्णावेवेति ((१)-१-१) आद्याध्याययोः साधितत्वात् ब्रह्मजिज्ञासा नाम विष्णुजिज्ञासैव। **''ब्रह्मेत्यनन्तेति च नाम येन''** इति निर्णयोक्तेः [४]सा जिज्ञासा अनन्तनामकपरमात्मजिज्ञासैव। तस्मादस्मिन्प्रबन्धे आनन्त्यनिरूपणं यत्कृतं तन्मुख्यतः अनन्तनामकविष्णोरेव कृष्णस्यैव - श्रीनिवासस्यैव यतो एतेषु रूपेष्वभेदात्। तत्र मानं तु **''नेह नानास्ति किञ्चन''** इत्यादि श्रुतिस्मृतयः॥

तथा च विष्णु - अनन्त - जिज्ञासा नाम तस्य पूर्णत्वजिज्ञासा। [५]यतः **''बहुः पूर्णतायां''** इति छान्दोग्यभाष्योक्तेः बहुः शब्दः पूर्णत्ववाची। **''विष्लृ व्याप्तौ''**[६] इति धातुः व्याप्तिमान् विष्णुरिति वदति। तद्व्याप्तिप्रकारस्तु देशकालगुणत इति त्रिविधम्। तस्मात् देशकालगुणतः व्याप्तिमान् विष्णुरिति सिध्यति यस्य जिज्ञासैव उपासा।

## ४. योगिनो द्विविधाः

उपासा द्विविधा प्रोक्ता शास्त्राभ्यासरूपा - ध्यानरूपा चेति। तत्र [७]प्रथमो ज्ञानयोगः अपरो कर्मयोगश्चेत्यपि कथ्यते। **''ज्ञानप्रचुरयोगो ज्ञानयोगः कर्मप्रचुरयोगः कर्मयोगः''** इत्युक्तेः (गी.भा.ता. ३-३)। न च तन्मात्रेण अन्यतरस्यान्यतराज्ञानमभिप्रेतम्। किन्तु प्राचुर्यनिमित्तोऽयं विभाग इति ज्ञातव्यम्।

अनेन विभागेनैव ज्ञानयोगिनः कर्मयोगिनः इति उपासकाः द्विविधा इत्यपि

---

२. त.प्र.भा. (३) पृ. १५६ | ३. ब्र.सू.भा. पृ. ८ (ब्र.सू.भा.)

४. म.ता.नि. पृ. ६६३ (म.ता.नि.) | ५. त.मं. पृ. ३०६

६. उ.प्र.भा. पृ. २७५-२७७ (ऐ.भा.द्वि.प्र. अ ५) / पृ. १८० (ऐ.भा.प्र.प्र.) विष्लृ व्याप्तौ नु (उ. ३-३१)

७. गी.भा. पृ. ५८, ६०, ६३, ३०१ (गी.भा.ता)

सिद्धो भवति। तस्मादेव कारणात् साधकानां साधनानुसारि खलु फलं भवति।[८]

**सम्पूर्णोपासनाद्ब्रह्मा सम्पूर्णानन्दभाग्भवेत्।**
**इतरे तु यथा योग सम्यङ्मुक्तौ भवन्ति हि॥**-पाद्मे ब्र.सू.भा.(३)३-४

## ५. उपासनार्थं गुणोपसंहारः

ब्रह्मापरोक्षार्थं खलु उपासना अवश्यं कर्तव्या। उपासना नाम ब्रह्मगुणचिन्तनम्। तदर्थं वेदार्थचिन्ता कृतैव पुरा। तेन विष्णुगुणानां शुद्धानन्दोरूसंविद्युतिबलौदार्य वीर्यसौन्दर्यदुष्टसंहारशिष्टपालनाद्यनन्तगुणान् आत्मत्वगुणस्य वा युगपत् एकबुध्युपारोहः सम्पद्यते। तदेव गुणोपसंहारो नाम।

**''अत्र उपसंहारो नाम एकबुध्युपारूढत्वं अविभागेन तान् उपसंहृत्य ब्रह्म ध्येयमित्यर्थः।''**[९] छलारीय अ.भा.टीका. -ब्र.सू.भा.(३)-३-२.

[१०]न तु दोषान् चिन्तयेत् यतस्ते तस्मिन् विष्णौ न सन्त्येव। अयोग्योपासनस्य अनर्थफलकत्वात्।

**गुणैरेव स तूपास्यो नैव दोषैः कथञ्चन।**
**गुणैरपि न तूपास्यो ये पूर्णत्वविरोधिनः ॥**

इति बृहत्तन्त्रे ब्र.सू.भा.(३)-३-२

## ६. स्वाध्यायः यथाशक्ति कर्तव्यः

वेदेतिहासपुराणानि शिक्षादिषडङ्गानि च सर्वैरपि साकल्येन अध्येतव्या-न्यपि सर्वेषां तादृशबुद्धिशक्त्यभावात्, यथाशक्ति स्वाध्यायः कर्तव्य एव। तादृशाध्ययनेन मननेन च यस्य यावद्गुणाः परमात्मनः स्फोरयन्ति तान् सर्वानपि गुणानुपसंहृत्यैव विष्णुः ध्येयो भवतीति शास्त्रनिर्णीतिः। तदुक्तं सूत्रभाष्ये[१०]

८. ब्र.सू.भा. पृ. १९३
९. अ.भा.छ. पृ. १८६
१०. प्र.भा. पृ. १९१, १९२

**‘‘उपास्य एकः परतः परो यो वेदैश्च सर्वैः सह चेतिहासैः।**
**सपञ्चरात्रैः सपुराणैश्च देवः सर्वैर्गुणैस्तत्र तत्र प्रतीतैः’’**।।

-इति भाल्लवेयश्रुतिः

**‘‘सर्ववेदोक्तान् ........ परमात्मोपास्यः ।’’** बृहतन्त्रे ।

अपि च

**युज्यते चोपसंहारोऽनुपसंहारश्च योग्यताविशेषात् ।**
**गुणैस्सर्वैरुपास्योऽसौ ब्रह्मणा परमेश्वरः ।**
**अन्यैर्यथाक्रमं चैव मानुषैः कैश्चिदेव तु ।।**

इति भविष्यत्पर्वणि (३)-३-

## ७. उपासकाश्चतुर्विधाः

एवं योग्यतामधिकृत्य साधकाः चतुर्विधाः सन्ति इति शास्त्रावमर्शनेन ज्ञायते। ते तु (१) एकगुणोपाकाः (२) चतुर्गुणोपासकाः (३) बहुगुणोपासकाः (४) वेदोक्तसर्वगुणोपासकाश्चेति। यद्यपि चतुर्गुणोपासकानां मनुष्योत्तमानां मध्य एव एकगुणोपासका अपि अन्तर्भवन्ति तथापि तारतम्यस्फुटार्थं सौकर्यार्थं विभागोऽयं कृतः।

**तत्र एकगुणोपासकाः** मनुष्योत्तमादवराः [११]तृणादिसञ्जीवाः। ते तु आत्मत्वैकगुणमात्रोपासकाः। तदुक्तं भाष्ये (मध्वसिद्धान्तसारोदाहृते)

**‘‘आत्मेत्येव परं देवमुपास्य हरिमव्ययम्।**
**केचिदत्रैव मुच्यन्ते नोत्क्रामन्ति कदाचन।।’’** इति

आत्मत्वोपासनं नाम परमात्मा मम स्वामी’’ इत्युपासनम्। यतो सर्वेऽपि

---

११. म.सि.सा. पृ. ४२९

गुणाः स्वामित्वान्तर्भावयोग्याः। ततो तावन्मात्रेण तेषां मोक्षप्राप्तेः। स्वामित्वं नाम स्वातन्त्र्यम्। यत्र स्वातन्त्र्यं तत्र सर्वगुणानुभूतिः। यथोक्तम्।

(१) **''स्वतन्त्रत्वात् सुखसज्ज्ञानशक्तिपूर्वैर्गुणैः पूर्ण एषोऽखिलैश्च।**
**स्वतन्त्रत्वात् सर्वदोषोज्झितश्च निस्सीमशक्तिर्हि यतः स्वतन्त्रः॥''**
-म.ता.नि. २२-१००

(२) **चतुर्गुणोपासका मानुषा एव।** तदुक्तमणुभाष्ये। (३)-४

''सच्चिदानन्द आत्मेति मानुषैः''। तत्र प्रमाणानि

[१२]ॐ आनन्दादयः प्रधानस्य ॐ ब्र.सू. (३)-३-५-१२

**''सच्चिदानन्द आत्मेति ब्रह्मोपासा विनिश्चिता।**
**सर्वेषां च मुमुक्षूणां फलसाम्यादपेक्षिता''॥** इति ब्रह्मतर्के(ब्र.सू.भा.)

मोक्षार्थं चतुर्गुणोपासना अत्यन्तं अवश्यं कर्तव्या । मानुषैस्तु चतुर्गुणोपासायाः अधिकोपासने शक्त्यभावात् इमे चतुर्गुणा एव उपास्या इत्यत उक्तं ब्रह्मतर्कोक्तवचनम्। तदुक्तं भाष्यदीपिकायां[१३]

''..प्राधान्येन चतुर्गुणोपासनं मनुष्याणामेव इत्यभिप्रायेण ग्रन्थद्वयप्रवृत्तेः इत्युक्तम्। (ग्रन्थद्वये - तत्त्वप्रदीपे - तत्त्वप्रकाशिकायां च। पुट १५२. (भाष्यदीपिकायां))

[१३]मध्वसिद्धान्तसारे **''ॐ आनन्दादयः प्रधानस्य ॐ''** इति सूत्रे मनुष्योत्तम-मारभ्य चतुर्गुणोपासनानियमस्योक्त्या सिद्धमेतदिति'' इति सङ्गृहीतम्।

**(३) बहुगुणोपासकाः**

एते ब्रह्मणः अवराः मानुषोत्तमाश्च देवर्षिपित्रादयः। तदुक्तं मध्वसिद्धान्तसारे -

---

१२. ब्र.सू.भा. पृ. १९४

१३. भा.दी. (२) पृ. १५२

**''देवर्ष्यादीनां तु यथायोग्यं बहुगुणविशिष्टव्याप्तभगवद्रूपविषया''।**

अत्रापि ब्रह्मोपदिष्टमार्गेण पञ्चषट्सप्ताष्टौ दशशतादिकतया गुणोपसंहारं कुर्वन्ति देवर्ष्यादयः। तदुक्तं मध्वसिद्धान्तसारे -(पदार्थसंग्रहे)[१४]

''गरुडरुद्रौ च गुणक्रिययोः सामान्याकारेण अनन्तभगवद्रूपोपासनां कुरुतः। इन्द्रादयस्तु गुणसामान्यतः क्रियासामान्यतो उपासनां कुर्वन्ति''।

**मध्वसिद्धान्तसारोदाहृतनयचन्द्रिकायां : (न.चं)**

**''रुद्रो गुणानां सामान्यतो उपास्तिं कुर्यात्। यथा घटज्ञः इत्यादि विशेषान् विनैव सर्वज्ञ इत्यादि। परे पार्वत्यादिद्रव्याणां भगवद्रूपाणां सामान्यतः उपास्तिं कुर्युः। ........''**

**सुधायां तु,**

**''परे शक्रादयः द्रव्याणि रूपाणि गुणक्रियासङ्कोचस्तु सिद्ध एवेति।''**

देवादीनां बहुगुणोपासने प्रमाणं तु[१५]

ॐ सर्वाभेदादन्यत्रेमे ॐ (३)-३-४-१

तत्र भाष्यम्

**''सम्पूर्णोपासनाद्ब्रह्मा सम्पूर्णानन्दभाग्भवेत्।**
**इतरे तु यथायोगं सम्यङ्मुक्तौ भवन्ति हि''**। -इति पाद्मे

तथैवाणुभाष्ये

**''सुरेश्वरैः यथाक्रमं बहुगुणैः''** (उपास्यः विष्णुः)

**देवादीनां गुणोपासनाविषये केचन विशेषाः सन्ति।**

---

१४. म.सि.सा. पृ. ४३०-४३१ १५. ब्र.सू.भा. पृ. १९३

देवैः सम्भृतिव्याप्त्यादयो गुणाः चतुर्गुणैः सह उपासायोग्याः। तदुक्तं भाष्ये :ह्न[१६]

**''ॐ सम्भृतिद्युव्याप्त्यपि चातः ॐ''** (३)-३-१४-१

**''देवादीनामुपास्यास्तु भृतिव्याप्त्यादयो गुणाः।''** -ब्रह्मतर्के

**(४) अनन्तगुणोपासकाः**

वेदोक्तसर्वगुणोपासकस्तु विरिञ्चिरेव। तदुक्तं मध्वसिद्धान्तसारे -

देवेष्वपि ब्रह्मा वेदोक्तानन्तगुणक्रियाविशिष्टानन्तरूपोपासनां करोति। सरस्वती तु क्रियांशे सामान्याकारेणैवोपासनां करोति।

**तदुक्तमनुव्याख्याने**

''ब्रह्मा सर्वगुणैश्चैव क्रियासामान्यतश्च गीः।'' **-उपासनापादे (३)-**

**नयचन्द्रिकायां**[१७]

''ब्रह्मा तु सर्ववेदोदितैः सर्वविशेषसहितैर्गुणक्रियांशाद्यात्मकैः सर्वैर्गुणैः सहितत्वेन विष्णुमुपास्ते। ब्रह्माणी तु तत्र क्रियाणां सामान्यत उपास्तिं कुर्यात्''।

**सुधायां तु (मध्वसिद्धान्तसारोदाहृत)**

''वेदोक्तसमस्तगुणक्रियोपेततया अनन्तरूपं हरिमुपासितुं ब्रह्मैव योग्य इत्यर्थः। सरस्वती तु क्रियासामान्यतः क्रियासंकोचेनोपास्ते। सकलवेदोक्तगुणोपेततया अनन्तरूपं हरिमुपास्ते। त्रिविक्रमादिक्रियास्तु नित्यविक्रान्त्यादिषु अन्तर्भावयन्तीत्यर्थः।''

---

१६. ब्र.सू.भा. पृ. १९७ १७. म.सि.सा. पृ. ४३१

**विरिञ्चमात्रोपास्या गुणा अपि सन्ति।** ते प्रियशिरस्त्व-त्रिविक्रमत्वादिगुणाः। **तदुक्तं[१८] भाष्ये।** फलभेदार्थमुपचयापचययोर्भावान्न सर्वेषां प्रियशिरस्त्वादिगुणो-पासाप्राप्तिः।

**''नैव सर्वगुणाः सर्वैस्पास्या मुक्तिभेदतः।**
**विरिञ्चस्यैव यन्मुक्तावानन्दस्य सुपूर्णता॥''**

ॐ प्रियशिरस्त्वाद्यप्राप्तिरूपचयापचयौ हि भेदे ॐ इति सूत्रं च

**''गुणास्त्रैविक्रमाद्याश्च संहर्तव्या न संशयः।**
**विरिञ्चस्यैव नान्येषां स हि सर्वगुणाधिकः॥''**इति बृहत्तन्त्रे(३)३-१२

## ८. गुणानन्त्यं सर्वैरप्युपास्यम्

भवन्तु भगवदुपासका बहवः एकगुण - चतुर्गुण - बहुगुण अनन्तगुणोपासका इति। तत्र विरिञ्चमृते न हि सर्वे अनन्तगुणोपासकाः। तस्मात् इतराधिकारिणां उल्लेखः अस्मिन् प्रबन्धेऽप्रसक्त इति चेन्न। योग्यताभेदेन उपस्तितारतम्यसद्भावेऽपि सर्वैरपि आब्रह्मस्तम्भपर्यन्ताधिकारिभिः ये ये गुणा उपास्यन्ते ते सर्वेऽपि भूमाधिकरणनयेनैव उपास्याः। सर्वेषां गुणानां भूमत्वं - पूर्णत्वं - आनन्त्यं ज्ञात्वैव यथाशक्ति उपास्यमिति तन्नयाभिप्रायः। आनन्त्यस्य पूर्णताज्ञानाभावेऽपि गुणक्रियासामान्याकारेण विशेषाकारेण ज्ञात्वैव समुपास्यो हरिरिति विवेकः। तदुक्तं भूमाधिकरणभाष्यादिषु। तत्सर्वं सङ्गृह्यते संक्षेपतः।[१९]

**सूत्रं -** ॐ भूम्नः क्रतुवत्ज्यायस्त्वं तथा च दर्शयति ॐ (३)-३-३७

**भाष्यं -** सर्वगुणेषु भूमगुणस्य ज्यायस्त्वं क्रतुवत् सर्वत्र सहभावात्। दीक्षाप्रायणीयोदयनीयसवनत्रयावभृथात्मकः क्रतुः''।

---

१८. ब्र.सू.भा. पृ. १९४, १९७

१९. ब्र.सू.भा. पृ. २१६, २१

**तत्र प्रमाणं-** ''भूमैव देवः परमो ह्युपास्यो नैवाभूमा फलमेषा विधत्ते।

तस्माद्भूमा गुणतो वै विशिष्टो यथाक्रतुः कर्ममध्ये विशिष्टः''। **इति गौपवनश्रुतिः**

**तत्र तत्त्वप्रदीपे**[२०]

''.......भूमगुणस्य च महत्त्वपर्यायस्यावरेषामुपासितुं अशक्यत्वात् न तस्य वैशिष्ट्यमिति प्राप्ते ......। तमृत एकगुणस्यापि अनुपासनीयत्वात्। न च तदुपासनस्याशक्यत्वात्। प्रत्यधिकारिनानात्वस्य वक्ष्यमाणत्वात्। यथा सवनत्रयात्मकः क्रतुरहीनादिषु प्रत्यहं सम्बध्यमानो विशिष्टो भवति तमन्तरेण एकस्याप्यह्नोऽननुष्ठेयत्वेन। ''**धृताः शास्त्राणामातताना**'' इति च सत्राणि प्रकृत्य याज्ञिकोक्तिः। एवमिहापि। अतः ''**पूर्णज्ञानः पूर्णानन्दः**'' इत्येवोपासनं कार्यमिति सिद्धम्।।''

तत्र तत्त्वप्रकाशिकायां च

''........ततश्च सर्वैः कर्तव्यत्वं तथा भूमत्वस्य सर्वत्रानन्दादिषु सहभावेनोपासन एव इष्टफलसिद्धेः''।

अपि च[२१]

**सत्याधिकरणे तत्त्वप्रदीपे भूमगुणलक्षणोक्तिविषये**

परमसाराख्यग्रन्थवचनमुदाहृतम्।

''स च सर्वगुणैः पूर्णो भूमेत्युच्चार्यते ततः।
स सर्वगुणसम्पूर्णो सर्वदेशेषु सर्वदा ।
स्वतन्त्रः सर्ववस्तूनि तदधीनानि सर्वशः।।'' **इति परमसारे**

२०. त.दी. पृ. ३८९-३९०

२१. तत्व.दी. पृ. ३६९-३७०

**न्यायमुक्त्यावल्यां च**[२२]

सिद्धान्तस्तु। **''भूमैव देवः परमो ह्युपास्यः''** इति श्रुत्या ज्ञानानन्दादिगुणेषु सर्वत्र भूमत्वस्य सहभावेन उपासने सत्येव इष्टफलसिद्धिः अन्यथा तु नेत्यवगमेन ''ज्ञानं भूम आनन्दश्च भूमा इत्येवरूपेण भूमगुणोपास्तेः अभिमतफलप्राप्तिहेतुत्वेन अर्थवत्वात् **सर्वैरुपास्यं भूमत्वं** यथा दीक्षाप्रायणीयोदयनीयसवनत्रयावभृतात्मकः क्रतुः सर्वयागेषु अनुवर्तन एव साफल्यात्, अन्यथा वैफल्यात् ज्यायस्त्वेन सर्वैः कर्तव्यस्तद्वदिति।''

**शेषचन्द्रिकायां** भूमोपासनस्य सर्वैरुपास्यत्वं भाष्यप्राचीनार्वाचीनटीकानु-सारेण व्याख्याय

**''पूर्णानन्दः पूर्णचितिः पूर्णस्वामीति सर्वशः।**
**पूर्णत्वसहभागेन गुणोपासा प्रसिद्ध्यति॥''** इत्युक्तम्।

## ९. अयमभिसन्धिः

सवैर्मुमुक्षुभिस्तावत् मोक्षार्थं उपासना कार्यैव । सा स्वस्वयोग्यतानुसारेण भविता। आब्रह्मतृणपर्यन्ताधिकरिणां सामान्योपासा त्तु आत्मोपसा। तदुक्तं **''आत्मेत्येवोसीत''** (बृ.उ. ३-४-७) इति श्रुतेः। तदर्थनिर्णीतिसूत्रं तु[२३]

**''ॐ आत्मगृहीतिरितरवदुत्तरात् ॐ''** इत्यत्र निर्णीता।
अयमेव विषयः बृहत्तन्त्रस्मृत्युक्तः। तद्यथा

**''आनन्दानुभवत्वाच्च निर्दोषत्वाच्च भण्यते।**
**नित्यत्वाच्च तथात्मेति वेदवादिभिरीश्वरः''॥**

-इति (ब्र.सू.भा. (३)-३-९-१७)

---

२२. न्या.मु. पृ. १९०-१९१

२३. ब्र.सू.भा. पृ. १९५

**तदेतदुक्तं सङ्क्षेपभाष्ये**

''सच्चिदानन्द आत्मेति मानुषैस्तु सुरेश्वरैः। ब्रह्मणात्वखिलैर्गुणैः॥''[२४]

अस्याधिकरणतात्पर्यं शेषचन्द्रिकायामेवं [२५]सङ्गृहीतम्। ''आत्मशब्दः एकगुणोपासकानां स्वामित्वमात्रं ज्ञापयति। मानुषैः चतुर्गुणोपासकैः आत्मशब्दात् सच्चिदानन्द आत्मेति ज्ञात्वोपास्यः, न तु स्वामित्वमात्रम्। सुरेश्वरैस्तु बहुगुणैः उपास्यः। आत्मशब्दस्तान् प्रति ....... बहुगुणान् वक्ति। न तु मानुषान् प्रतीव चतुर एव गुणानिति यावत्। आत्मशब्दः तं प्रति ब्रह्माणं) सर्ववेदोक्तान् गुणान् ब्रवीति। न तु सुरेश्वरान् प्रतीव बहूनेवेति।''

तथा च एकगुणोपासकैः आत्मत्वमात्रं, चतुर्गणोपासकैः सच्चिदानन्दात्मत्वमात्रं, सुरैः बहुगुणाः, ब्रह्मणा तु वेदोक्तानन्तगुणाः उपास्या भवेयुः भूमगुणेनसह। सुरैः प्रियशिरस्त्वं त्रिविक्रमत्वाद्याश्च नैवोपास्याः। किन्तु सम्भृतिव्याप्त्यादयः उपास्याः। यतिभिः वेधादिगुणा नैवोपास्याः। सर्वेषामात्मत्वं तु सामान्यम्। तृणादिजीवान् विहाय सर्वैः चतुर्गुणोपासापि सामान्यैव।

एवमुपासा परोक्षज्ञानानन्तरमेव विशेषतो मानुषाणां भवति।

## १०. अत्रेयं जिज्ञासा कृता ब्रह्मसूत्रेषु (अनन्तनामकरूपोपासने)

साधकैः खलु अपरोक्षज्ञानात्प्राक् स्तोत्रपठणव्रताद्यनुष्ठानतीर्थाटनादिकं क्रियते। अपरोक्षज्ञाननन्तरमपि एतेषामावश्यकताऽस्ति न वा इति जिज्ञासायां सूत्रकारैः एवं निर्णीतम्॥ तत्र सूत्रम्[२६]

ॐ विकल्पो विशिष्टफलत्वात् ॐ ॥ (३)-३-३९-६१

तत्र भाष्यम् ।

---

२४. ब्र.सू.भा. पृ. २८२

२५. शे.चं. (२) पृ. २४७

२६. ब्र.सू.भा. पृ. २१७, २१८

२७. पृ. ३९१

''स्वयोग्योपासानन्तरमपि सामान्यस्यापि कस्यचिदुपासनं विकल्पेन भवति विशिष्टफलापेक्षया''। इति। तमेतं प्रमेयं प्रमाणेन द्रढीकरोति भगवानाचार्यः।

**''नृसिंहादिकमन्यच्च दुरितादिनिवृत्तये।**
**उपास्यते यथायोगं न वा फलविभेदतः''**।। इति ब्रह्मतर्के। इति।

[२७]**तत्र तत्त्वदीपिकायामुक्तं**

[२७]''यद्यपि न केवलं मुक्तिफलापेक्षया तथाऽपि मुक्तिद्वारभूता दुरिताज्ञानान्यथाज्ञान-कामादिनिवृत्तिरुत्तममेव फलमेपक्ष्यते। नृसिंहादिकम्। ..... न वा क्रियते, अन्यफलापेक्षत्वात्।।

**तत्र तत्वप्रकाशिकायाम् -**[२८]

स्वमोक्षसाधनातिरिक्तं च नरसिंहाद्युपासनं कर्तव्यं न वा न तु न कर्तव्यमेव। तस्य मोक्षार्थोपासनानन्तरभावित्वेन दुरितादिनिवृत्तिलक्षण-मोक्षोपयोगिफलसाधनत्वेन चोक्त-दोषाभावात्। किं तु विकल्पस्तु **यस्य विशिष्टफलापेक्षाऽस्ति तेन कर्तव्यम्। यस्य तु नास्ति तेन नेति। स्वयोग्योपासनयैव तीव्रया दुरितादिनिवृत्त्युपपत्तेरिति भावः।**''

**तत्र भाष्यदीपिकायां च**[२९] **(ब्र.सू.भा.भा.दी. (३)-३-३९-६१)**

**''नृसिंहादिकमन्यच्च''** इत्यत्र अदिशब्देन (ब्रह्मतर्कवचने प्रथमादि-शब्देन) **''कृष्णरामहयशीर्षादिवैष्णवरूपं गृह्यते। द्वितीयेन अज्ञानमिथ्या-ज्ञानकामक्रोधादि।''**

''विशिष्टफलापेक्षया सामान्योपासनस्य कर्तव्यतायां यस्य मुमुक्षोः दुरितमस्ति तन्निवृत्तिरूपविशिष्टफलापेक्षास्ति तेन कर्तव्यम्। यस्य तु मुमुक्षोर्न

---

२८. त.प्र.भा. (३) पृ. २७१, २७२ २९. भा.दी. (२) पृ. २३५-२३६

दुरितमस्ति तत्सत्त्वे वा स्वयोग्यतीव्रोपासनेनैव दुरितादिनिवृत्तिसिद्धेस्तदनिच्छा तेन न कर्तव्यमिति। अत एव न वैफल्यदोषः।'' इति।

**अनेनेदमुक्तंभवति।** स्वबिम्बदर्शनानन्तरमपि दुरितसद्भावे तन्निवृत्यर्थं **नृसिंहरामकृष्णहयशीर्षाद्युपासा** विकल्पेन विधीयते। **पुनरादिशब्देन अनन्तोपासनविवक्षापि** न निषेध्या। बिंबदर्शनात्प्रागुपासापि यदि क्रियते तत् नैव दोषाय कल्पयते।

तस्मात् अनन्तव्रतजपहोमादिकमपि न निषेध्यम्। अतः व्रतादिकं अपरोक्षज्ञानात् प्राक् दुरितादिनिवृत्तिद्वारा मनः शुद्ध्यर्थं कार्यमेव।

## ११. व्रतोपासा

उपासा नूनं शास्त्रज्ञानदार्ढ्यानन्तरमेव प्रारब्धा भवति। परं एतत्पर्यन्तं सततश्रवण - मनन - गुरुचरणसेवादिकं शमदमादिप्राप्त्यर्थं च एकादशी-चातुर्मास्यव्रतादिकं देहादिशुद्ध्यर्थं कार्यमेव। तादृशव्रतेषु, अनन्ततृतीया अनन्तचतुर्दशी सुप्रथिता। **तदुक्तं पाद्मे-**[३०]

**''नभसे वाथ वैशाखे मार्गशीर्षेऽथवा पुनः।**
**शुक्लपक्षतृतीयायां**
**उक्तानन्ततृतीयैषा कृतानन्तफलप्रदा ॥''**इति**(वाचस्पत्ये उदाहृतम्)**

अनन्तचतुर्दशीव्रतन्तु भविष्योत्तरपुराणान्तर्गतं[३१] प्रसिद्धमेव भाद्रपदशुक्लचतुर्दश्यां यत्क्रियते। तदुपदिष्टं भगवता कृष्णेन धर्मराजाय वनवासकाले। तत्सारांशस्तु एवं सङ्गृह्यते।

''**कोऽयं अनन्त**'' इति पृष्टवते धर्मराजाय कृष्णः-

---

३०. वा.को. पृ. १४८ ३१. श.क. पृ. ४१-४४

‘‘अनन्त इत्यहं पार्थ मम रूपं निबोध तत्।
आदित्यादिग्रहात्मासौ यः काल इति पठ्यते।
कलाकाष्ठामुहूर्तादिदिवरात्रिशरीरवान्।
पक्षमासर्तुवर्षादियुगकालव्यवस्थया।
योऽयं कालो मयाख्यातः सोऽनन्त इति कीर्त्यते।
सोऽहं कृष्णोऽवतीर्णोऽत्र भूभारोत्तारणाय च॥’’ इति ‘‘शब्दकल्पद्रुमे’’ उदाहृतम् (श) । इत्यादि स्वरूपं स्वस्योक्तवान् किल।

**ततस्तत्र कृष्णप्रोक्त इतिहासः अस्मिन् विषये अनूद्यते।**

सुमन्तुर्नाम वसिष्ठकुलजो द्विजः भृगुकुलजया दीक्षानाम्न्या भार्यया पुरा कृतयुगे वसति स्म। तयोः एकैव सुता **‘‘शीला’’** सुशीलापि। दीक्षा तु कदाचित् ज्वरदाहेन पीडिता पञ्चत्वं गता। ततः सुमन्तुः अपरां कन्यां नामतः **‘‘दुःशीलां’’** सदा कलहप्रियां कथञ्चिदुवाह।

काले गते स्वदुहितरं सुमन्तुः कौण्डिण्यनाम्ने द्विजेन्द्राय ददौ । नवदम्पती यदा स्वगृहं गतौ तदा सुमन्तुपत्नी न किञ्चिदपि शुभं पाथेयं ददौ किन्तु भोज्यावशिष्टचूर्णेन पाथेयं कृत्वा ददौ।

कौण्डिण्यपत्नी पथि गच्छन्ती मध्याह्ने यमुनातीरे कञ्चनव्रतं कुर्वन्तीः स्त्रियः दृष्ट्वा तदनन्तव्रतमिति तैः श्रुत्वा, ताभिः तत्प्रसादं अनन्तदोरं च स्वीकृत्य वामकरे तद्बध्वा च पतिगृहं पत्या जगाम। अनन्तप्रसादमहिम्ना कौण्डिण्यः श्रीमानभूत् धनधान्यादिमांश्च।

कदाचित् संसारतारकं तद्दोरं पत्नीकरे दृष्ट्वा कौण्डिण्यः तदवज्ञया स्वधर्मपत्नीं इयं मां वशीकरोतीति शङ्कया तद्दोरं अग्नौ प्राक्षिपत्। परिणामतः अनन्तावज्ञया तस्य सर्वा सम्पत् नष्टाऽभूत्। तदा पश्चात्तापेन सन्तप्तः कौण्डिण्यः तपसे सङ्कल्प्य अनन्तनामकभगवदन्वेषणाय वनं जगाम। यान् यान् पथि कौण्डिण्यः ददर्श सर्वानपि (चूतवृक्षं - धेनुकं वृषभं - पुष्करणीद्वयं - गर्धभं -

कुञ्जरं) चूतवृक्ष - धेनुक - वृषभ - पुष्करणीगर्धभकुञ्जरान् ''अनन्तः दृष्टः भवद्भिरिति'' पप्रच्छ। सर्वे ते नेत्यब्रुवन्। तेन नितरां विषण्णो निर्विण्णो कौण्डिण्यः प्राणत्यागे मनो दधे। तदैव वृद्धद्विजरूपेण अनन्तः आगत्य कौण्डिण्यं स्वलोकं नीत्वा अनुजग्राह। अनन्तानुग्रहं प्राप्य स मुनिः स्वगृहमागत्य चतुर्दशवर्षाणि तद्व्रतं कृत्वा कालान्तरे देहान्ते अनन्तस्मरणं प्राप्य अनन्तपुरं जगाम''।

**एवं धर्मराजाय कथां श्रावयामास कृष्णः। तस्मात् एतद्व्रतं निष्कामभक्त्या कृत्वा सर्वे मुमुक्षवः अनन्तमिष्टपुण्यं प्राप्य मुक्ता भवन्ति। अनन्तदोरस्तोत्रमुक्तं भविष्योत्तरपुराणे**

**''अनन्तदेवदेवेश भुक्तिमुक्तिप्रदायक।**
**सर्वेष्टदमिदं सूत्रं धारयामि तव प्रियम्''।**

**''अनन्तसंसारमहासमुद्रमग्नं समभ्युद्धर वासुदेव।**
**अनन्तरूपे विनियोजयस्व ह्यनन्तसूत्राय नमो नमस्ते।।''**

इयं कथा **पञ्चमवेद इति ख्याते पुराणेषु** अन्यतमे **भविष्योत्तरपुराणे** भगवता व्यासेन ग्रथिता भक्तानुग्रहकामिना। तस्मादिदमुपादेयमनुष्ठेयं च।

## १२. स्तोत्रतीर्थयात्रारूपोपासा

अपि च अनन्तोपासनं सर्वदा कार्यं सदाचारैः स्तोत्रैः तीर्थाटनैश्च। तदुक्तमाचार्यैः ।[३२]

उपासाविषये- ''विमलैः श्रुतिशाणनिशाततमैः सुमनोऽसिभिराशु निहत्य दृढम्।
बलिनं निजवैरिणमात्मतमोभिदमीश**मनन्तमुपास्व हरिम्।।''**

-द्वादशस्त्रोत्रे ४.५

३२. सं.ग्रं. पृ. ३७८, ३७९

स्तोत्रविषये -''**सन्ततं चिन्तयेऽनन्तमन्तकाले विशेषतः।**
**नैवोदापुर्गृणन्तोऽन्तं यद्गुणानामजादयः॥**'' द्वा. स्तोत्रे १-१२

**तीर्थाटनमपि कार्यं देहादिविशुद्धये ।** श्रीवादिराजमुनीन्द्रैः अनन्त-सम्बन्धितीर्थक्षेत्रेशानां वर्णनं कृतं अनुष्ठानार्थं। तद्यथा[३३]

(१) पश्चिमप्रबन्धे रजतपीठपुरे अनन्तेश्वरस्तोत्रं :ह्ह

शर्वान्तिर्यामितां स्वीयां प्रियान्प्रति निबोधयन्।
दयावारिनिधिः शैवीं शिलामाश्रित्य शोभते॥

(२) दक्षिणप्रबन्धे अनन्तशयनं (पद्मनाभम्)

''श्रीभूम्यां कृतपादसेवनमनर्घ्योरुस्फुरद्भूषणम्।
शेषाङ्गे सततं शयानमुदरप्रोद्भासि पद्मं प्रभुम्॥

धात्रा स्तोत्रचयैः स्तुतं फणिफणैश्छत्रोपमैर्मण्डितम्।
सर्वेऽनन्तपुरेश्वरं मुनिवरप्रेमाकरं श्रीकरम्॥

त्रीणि त्रयी परिजगद यदात्मदृष्टि द्वाराणि चारूतरशीलनरोचितानि।
प्रत्यक्षमेतदनुभावयति प्रमेयं प्रौढप्रजाः प्रभुरनन्तपुरेऽब्जनाभः॥

नमोस्त्वनन्ताय सहस्रमूर्तये सहस्रपादाक्षिशिरोरुबाहवे।
सहस्रनाम्ने पुरुषाय शाश्वते सहस्रकोटियुगधारिणे नमः॥ महाभारते च

-सन्ध्यासन्त्रेऽपि पठितः

## १३. जपोपासा

भगवदपरोक्षज्ञानात् प्राक् व्रतजपहोमादिरूपोपासा शमदमादिसिध्यर्थं कर्तव्यैव। व्रतेषु अनन्तव्रतं प्रतिपादितं पूर्वत्र। तथैव सकलदुरितनाशार्थं

---

३३. ती.प्र. पृ. १८, १६१, १६३

अनन्तनामजपमपि कार्यमेव। तद्विधानमत्र चिन्त्यते तत्वतः।

अनन्तनामोच्चारणरूपजपोपासा अच्युतगोविन्दरूपनामद्वयसहकृतेन नामत्रयोच्चारणरूपजपेन सकलरोगोपलक्षितसर्वदुःखनाशे हेतुर्भवतीति स्मृतिमुक्तावलीकृष्णाचार्यैः श्रीकृष्णामृतमहार्णवव्याख्याने उक्तम् । तद्यथा।[३४]

''भगवद्रूपचिन्तनं तन्नामोच्चारणस्य रोगोपलक्षितसर्वदुःखनिवर्तकत्वात् कर्तव्यमिति व्यासवाक्यं पठति - अच्युतानन्तेति। अच्युतः चतुर्विधनाशरहितः। अनन्तः देशकालाद्यपरिच्छिन्नः। .....अच्युतानन्तगोविन्द इति त्रिरूपात्मकहरेः नामोच्चारण-रूपौषधवन्तः ये सकला रोगास्ते नश्यन्ति। ..... यद्भगवन्नामोच्चारणस्य सर्वरोगनिवर्तकत्वं तत्सत्यं सत्यं सत्यमेव। ........ तस्मादच्युतादि नामोच्चारणं कार्यमिति।''

प्रथमं यथाविधि सङ्कल्प्य गणेशमभ्यर्च्य न्यासादिकं कार्यम्। अनन्तरं ध्यानं कार्यम्।

अथ ध्यानम्

**''समस्तदुरितव्याधिसङ्घध्वंसपटीयसे।**
**अच्युतानन्तगोविन्दधाम्ने नमो नमः॥''** इति ध्यात्वा

॥ ॐ अच्युताय नमोऽनन्ताय नमो गोविन्दाय नमः ॐ॥

इति मन्त्रमुक्तसङ्ख्यया जपेत्।

**''अच्युतानन्तगोविन्दनामोच्चारणभेषजात्।''**
**नश्यन्ति सकला रोगाः सत्यं सत्यं वदाम्यहम्॥** इति वा

विध्युक्तमन्त्रेण मन्त्रमुक्तसंख्यया जपं कृत्वा कृष्णार्पणं कुर्यात्।

---

३४. कृ.म. पृ. ३०४ (२००२)

## १४. नामत्रयमन्त्रहोमरूपोपासा (अनन्तनामयुक्तस्य नामत्रय-मन्त्रस्य जपहोमादिषु विनियोगः)

साधकैः क्रियमाणसाधनजातानां न्यूनातिरेकदोषपरिहारार्थं व्रतजपनामत्रय होममपि कार्यमेव। [३५]अन्वाधानसङ्ग्रहाख्यग्रन्थानुरोधेन तद्विधानप्रक्रियादिश्च चिन्त्यते।

**अच्युतानन्तगोविन्दनामोच्चारणभेषजात् (भीषिताः) ।**
**नश्यन्ति सकला रोगाः सत्यं सत्यं वदाम्यहम्॥**

एवमेवायं मन्त्रः जपमात्रेण न्यूनातिरेकदोषाणां प्रायश्चित्तायापि भवति। स्मर्यते हि प्रयोगपारिजातादिषु (अन्वाधानादिषु)

**''प्रमादात् कुर्वतां कर्म प्रच्यवेताध्वरेषु यत् ।**
**तद्विष्णोः स्मरणादेव सम्पूर्णं स्यादिति श्रुतिः॥''**

अत्रास्य प्रमाणवाक्यस्य त्रयोऽर्थाः व्याख्यातृसम्मताः अध्वरादिषु। कर्म कुर्वतां प्रमादादिना यत्किञ्चित् प्रच्यवेत तत् विष्णोः स्मरणात् अच्युतानन्तगोविन्दनाम त्रयस्मरणात् संपूर्णं स्यादित्येकः। तद्विष्णोः स्मरणात् = तद्विष्णोः परमं पदं इत्यादिविष्णुसूक्तगतमन्त्रद्वयपठनेन संपूर्णं स्यादिति द्वितीयः। तद्विष्णोः स्मरणात् = विष्णो इति सम्बुध्यन्तशब्दस्य त्रिवारं स्मरणात् सम्पूर्णं स्यादिति तृतीयः।

अत एव यज्ञादिकर्मान्ते याज्ञिकाः न्यूनातिरेकादिस्वरवर्णादिसकल-लोपप्रायश्चित्तरूपेण तद्विष्णोरिति मन्त्रत्रयम् विष्णो इति सम्बुध्यन्तं पदं अच्युतानन्तगोविन्देति नामत्रयं च पठन्ति।

प्रायश्चित्तप्रकरणे ज्ञाताज्ञातपापपरिहारार्थं जप-दान-व्रत-होमाः

---

३५. अन्वाधानं पृ. १९

विहिताः। तत्र जपप्रकरणे नामत्रयमन्त्रस्य अयुतसंख्यया जपः विहितः। जपसंख्यादशांशेन आज्यहोमश्च व्यधायि। अयमेव नामत्रयमन्त्रहोम इत्युच्यते।

### १५. उपसंहारः

एवं आनन्त्योपासनं प्रथमतः स्तोत्र-जप-होम-व्रत-तीर्थाटनादिभिः करणेन दुरितादिनिवृत्तिः, तेन च मनःशुद्धिर्भवति। मनः शुद्ध्या निरन्तरश्रवणमननादिना इहामुत्र वैराग्येन भगवति अव्यभिचरितभक्त्या कालतो योग्यतानुसारेण भगवदपरोक्षो भवति। अपरोक्षानन्तरमपि एतेषां उपासनं कार्यमिति पाण्डवानां चरितं स्पष्टयति महाभारतादिषु। तस्मात् आनन्त्योपासा सर्वैरपि यथाशक्ति कार्यमेव।

## ३.७ कर्नाटकहरिदाससाहित्ये आनन्त्यविचारः

द्वैतवेदान्ताधिगमे सहस्रशो मूल-टीका-टिप्पणीग्रन्थाः अद्यापि संस्कृतभाषायामुपलब्धाः जिज्ञासुजनानां पाठप्रवचनार्थम्। न केवलं गीर्वाणवाण्यां किं तु प्रादेशिकभाषायां अपि विशेषतः कन्नडे सहस्रशो हरिनामकीर्तनव्याजेन हरिदासैः श्रीपादराज व्यासराज - वादिराजादियतिभिः पुरन्दर कनकदास - विजयदासादिमहानुभावैः - विविधगेयपद्यानि रचितानि सुप्रथितानि वैदिकलौकिकेषु। तेषु पद्येषु शतशः प्रमेयानि ज्ञातुं शक्यन्ते। तथैव द्वैतवेदान्तस्य आनन्त्यविचारपराणि पद्यान्यपि उपलभन्ते। तेषु हरेः अनन्तगुणपूर्णत्वं, कालानन्त्यं, जीवानन्त्यं, कर्मानन्त्यादिकान्येकविषयाणि प्रस्तुतानि।

दृष्टान्ततया त्रयाणां पद्यानां (कन्नडस्थ) संस्कृतभाषायां भावानुवादः अत्र क्रियते।

(१) श्रीपादराजकृतिः

**''अनन्तकालात्त्वामजानन् संसारे जन्मजन्मनि मग्नः ।**
**अनन्तकालात् नाहं तावको भूत्वा मूर्खोऽभवम् ।**
**अनन्तकालात् तवचरणरतिहीनः दुःखितोऽस्मि।**
**तथाप्यनन्तकालात् कस्माच्चन पुण्यादद्य आगतः।**
**तेनैव पुण्येन तव भक्तोऽभवम्।**
**मन्मनोऽपि तव पादे पतितं तस्मात्।**
**पालय मां पालय दीननाथ रङ्गविठल स्वामिन्''।**

(२) श्रीव्यासराजकृतिः

**''नाहं बिभेमि ममानन्तदोषेभ्यः।**
**यदा भवान् अनन्तकल्याणगुणगणशीलः।**
**नाहं विशङ्के ममानन्तापराधेभ्यः।**
**यदा तव करुणाऽनन्ता हि हरे हरे आगच्छ।**
**मम जन्मनि जन्मनि श्रीकृष्ण।''**

(३) श्रीपुन्दरविठलकृतिः

**''सञ्चितकर्माणि अनन्तकोटीनि।**
**प्रारब्धकर्माणि कोटिकोटीनि।**
**आगामिकर्माणि कोटिकोटीनि**
**न मुक्तिः पुरन्दरविठलदर्शनमन्तरेण''**

उपर्युक्तपद्यानां मूलकन्नडकृतयः परिशिष्टे-१६ (पृ. २६१) प्रदत्ताः।

**॥ इति तृतीयोऽध्यायः ॥**

## चतुर्थोऽध्यायः

# अर्वाचीनविज्ञानेषु आनन्त्यनिरूपणम्

## ४.१ गणितशास्त्रेऽऽनन्त्यम्

### १. पीठिका

इतः पूर्व द्वैतवेदान्ते आनन्त्यनिरूपणप्रकारं वैविध्यं उपासनादिकं अभिहितम्। अधुना अर्वाचीनविज्ञानपद्धतिषु आनन्त्यप्रस्तावः अस्ति वा न वा इति चिन्त्यते। अर्वाचीनविज्ञानेष्वपि गणितभौतशास्त्र जीवशास्त्रखगोलविज्ञानेषु एष विचारः विचार्यते। तत्रापि गणिते अनन्तः आनन्त्यं वा शब्दः कथं प्रस्तावितः, भौतशास्त्रे देशकालयोः आनन्त्यं अस्मिन् तुरीयाध्याये ज्ञातुं प्रयतिष्यते। गणिते आनन्त्यं बहुतरं चिन्तितं। तत्सर्वं संक्षिप्ततयाऽत्र पश्यामः।

संख्यामधिकृत्य प्रवर्तमानं शास्त्रं गणितशास्त्रम्। गणिते रेखादिकमपि चिन्तितं भवति।

एकं द्वे त्रीणि इत्यादयः संख्याः (१, २, ३, ........) खलु मनुष्येन बहुकालात् ज्ञाता आसन्। [१]इमाः धनात्मकपूर्णांका इति कथ्यन्ते ये बहवोऽनन्ततः। इमाः संख्याः दशभिः अंकैः लिखिता भवन्ति। ते ०, १, २, ३, ४, ......९।। तदिदं विधानं भारतीयैः गणितज्ञैः पुरैव प्रथमतः प्रतिपादितम्।

तदनन्तरं [२]ऋणात्मकपूर्णाङ्काः प्रयुक्ताः शास्त्रे इति श्रूयते। ते, ०(शून्यं)-१, -२, -३ ....।। धनात्मकं ऋणात्मकं संख्ये सम्भूय [३]पूर्णाङ्काः इति शास्त्रे कथ्यन्ते।

गणितशास्त्रे विद्यामानकतिपयसमी[४]करणसमस्यापरिहारार्थं काचन

---

१. Natural or Positive numbers

२. Infinitely many

३. Integers,

४. Equations,

अधिकसंख्याः सृष्टाः। ता एव भागलब्धपरिमेयाः [५](भाज्यसंख्याः) इति उक्ताः। तद्यथा $\frac{3}{4}$; $-\frac{1}{2}$; $-\frac{7}{3}$, $3=\frac{3}{1}$; $0=\frac{0}{5}$ इत्यादयः। एता अपि बहवोऽनन्ततः।

पूर्णाङ्कयोर्मध्येऽपि वस्तुतः अनन्तसंख्या सम्भवन्ति। न हि तैः काचनसमीकरणसमस्याः न परिह्रियन्ते। तदर्थं $\sqrt{2}, \sqrt{3}, \sqrt{5}$ रूपसंख्याः व्युत्पादिताः। ता एव [६]अभागलब्धापरिमेयाः इति कथ्यन्ते। एवं भाज्याभाज्यसंख्ये मिलित्वा[७]वास्तवसंख्या सम्भवन्ति।

वास्तवसंख्या अपि बीजगणितसमीकरणसमस्यापरिहारार्थं नालमिति मत्वा काचन [८]ऊह्यसंख्याः व्युत्पादिताः त एव $\sqrt{-1}$ इत्यादयः। एवं वास्तवं ऊह्यं च संख्ये मिलित्वा [९]संयुक्तऊह्यसंख्याः व्युत्पादिताः। अत्रैव हि संख्याक्रमः उपसंहृतो भवति।

## संख्यापट्टिका

### संयुक्त ऊह्यसंख्या (Complex Nos.)




---

५. Rational numbers, ६. Irrational numbers,
७. Real numbers, ८. Imaginary numbers,
९. Complex numbers, Please see प. १७-१८, Page 262-267.

धनात्मकपूर्णाङ्कानां मध्ये [१०]अविभाज्यसंख्या इति विशिष्टसंख्याः सन्ति। ते तु २, ३, ५, ७ । इयं एकसंख्यायाः अधिका, एकेन स्वेनैवापि भाज्या। इयमेव हि अविभाज्यसंख्या नाम। इमेऽपि बहवो अनन्ततः।

## २. आकाशः SPACE

रेखात्मके गणितेऽपि आनन्त्यप्रस्तावोऽस्ति। एकं cm, त्रीणि cm, दश cm रेखानां मध्ये cm त्रयं cm दशकयोर्मध्ये दश cm रेखैव गरीयानिति भाव्यते। वस्तुतस्तु बिन्दुसंख्याः सर्वास्वपि रेखासु समा एव। अनन्ता एव। सा भवतु अनन्ता Alephone नाम। तथैव एकं cm रेखायां यावन्तः बिन्दवः सन्ति तावन्त एव पूर्ण रेखायां त्रिमानमेव (3 dimensions) रेखास्वपि, किं बहुना विश्वेऽपि तावन्त एव सन्ति इति, एतदाश्चर्यतमम्। परं सत्यमिति गणितज्ञाः भणन्ति।




## ३ आनन्त्यप्रकाराः

यद्यपि पूर्णाङ्काः वास्तवसंख्याः अनन्ता इति वाच्यमानेऽपि अनयोरनन्तयोर्मध्ये वैलक्षण्यं (Distinction - वैशिष्ट्यं) अस्ति। धनात्मकऋणात्मकपूर्णाङ्कौ, पूर्णाङ्कौ, भाज्याभाज्यौ सम्भूय एकप्रकारकानन्त्ये वर्गीकार्याः। वास्तवं ऊह्यसंख्ये मिलित्वा पूर्वस्मात् आनन्त्यात् ज्यायान् भवतः।

---

१०. Prime number.

प्रथमानन्त्यं $Aleph_0$ इति द्वितीयानन्त्यं $Aleph_1$ इति क्रमशः कथ्येते। प्रथमात् द्वितीयं ज्यायान् इति शास्त्रस्थितिः। एवमेव $Aleph_2$, $Aleph_3$ ........अनन्तावधयः सन्ति संख्याः। एवं गणितसंख्यागणनप्रकारेष्वपि तारतम्यमस्ति।

यदि धनात्मकऋणात्मकपूर्णाङ्कव्यूहात् कतिपयधनात्मकपूर्णाङ्काः व्यवकलिताश्चेत् अवशिष्टाः पुनः अनन्ता एव भवन्ति। एवमेव सर्वेष्वपि आनन्त्यसंख्याप्रकारेषु संभवतीति गणितशास्त्रज्ञाः संभावयन्ति स्मारयन्ति च औपनिषदं वचः।

''**पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुदच्यते।**
**पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते।।**''इति। बृहदारण्यकोपनिषत्

गणितशास्त्रे आनन्त्यम्

आनन्त्यस्य पारं नास्ति। अस्मिन् जगति अनन्तसदृशं न किञ्चिदस्ति।

उदा : १, २, ३, ४, ५, .......... अस्य स्वाभाविकसंख्या न समाप्नोति अन्ताभावात्।

आनन्त्यं नैव वर्धते। तत् पूर्णमेव पूरितं। अनन्तं न वास्तवसंख्या। न तत् मातुं शक्यम्। बहुदूरस्था अपि तारागणं (Gallaxy) नानान्तम्।

अनन्तविषयकमुख्यपरिगणनं तु

$-\infty < x < \infty$ where $x$ is real number. which is mathematically short hand for "minus infinity is less than any real number and infinity is greater than real number".

''अणोरणीयान् महतो महीयान्'' (काठक उप.)

## ४. अनन्तस्य विशेषगुणाः

| | |
|---|---|
| $\infty + \infty = \infty$ | $-\infty + -\infty = -\infty$ |
| $\infty \times \infty \text{ X} = \infty$ | $-\infty \times -\infty = \infty$ |
| $-\infty \text{ X } \infty = -\infty$ | $x + \infty = \infty$ |
| | $x + (-\infty) = -\infty$ |
| | $x - \infty = -\infty$ |
| | $x - (-\infty) = \infty$ |

For $x > 0$

$x \times \infty = \infty$

$x \times (-\infty) = -\infty$

For $x < 0$

$x \times \infty = -\infty$

$x \times (-\infty) = \infty$

Undefined operations

$0 \times \infty$

$0 \times -\infty$

$\infty + -\infty$

$\infty - \infty$

$\infty / \infty$

$\infty^{\circ}$

$/ \infty$

## ४.२ भौतशास्त्रे आकाशः कालश्च

अर्वाचीनविज्ञानरीत्या आकाशः अस्मत्परीतः सर्वोऽप्यवकाशः तत्र द्रव्यभरितो वा न वा इति न चिन्त्यम्। सर्वोऽप्यवकाशः आकाश एव। स तु भूमौ अन्तरो वा बाह्यतोऽपि वा भवेत्। विज्ञानरीत्या आकाशोऽपि मेय एव। आकाशस्य आयामत्रयो सन्ति। (Three dimensions)

कालोऽप्येवमेव मेयः यः घटनायाः आद्यन्तयोरवधिः। कालस्य अत्यन्तकनिष्टावधिः ''सेकेन्ड'' इति यं वदन्ति सः $\frac{1}{299792458}$ मीटर् दूरक्रमणकालः।

इमौ देशकालौ विंशतिशतमानपूर्वं अनन्तरं च कथं जानन्ति स्म इति पश्यामः। तौ तदा गेलिलियो न्यूटन् विज्ञानिद्वयसिद्धान्तानुसारेण जनाः विदुः। न्यूटन् प्रकारेण एकं वस्तु चलनस्थितौ अस्ति वा  न वा इति ज्ञातुमशक्य एव - तस्य न्यूटन् प्रथमनियमानुसारेण। तत्स्थितिं अन्यद्वस्तुनः सकाशात् दृष्ट्वैव शक्यते वक्तुं न त्वन्यथा। चलद्वाहने उपविष्टस्य बहिःस्थितस्य च अनुभवः सुविरुद्धेति सर्वे जानन्त्येव। अनेनेदं अवगतं भवति। आकाशः निरपेक्षमेयः नेति। (Lack of absolute goal) तदिदं प्रेक्षकप्रेक्ष्ययोर्मध्ये सापेक्षवेगं अवलम्बते। यद्यपि आकाशं नैरपेक्षेण सूचितुं अशक्येऽपि समस्या तथा निरूपणे नास्ति काचित् अनुपपत्तिः इति न्यूटन् वादः। आकाशकालयोः न कश्चित्सम्बन्धः इति तस्य मतं अस्माकमपि तथैव भाति।

कालाकाशौ विश्वं च परस्परं निकटसम्बन्धवन्तः। विश्वेऽस्मिन्  सर्वेषां विषयनिरूपणे एतेषामावश्यकतास्त्येव। तथापि एतेषां परिमितयः सन्त्येव। न हि सर्वे समानाः। विंशति शतमानपर्यन्तं विश्वसृष्टेः विषये - आकाशस्थनक्षत्राणां दूरादिविषये वा नासीत् बहुचर्चा विज्ञानिमध्ये। तत्सर्वं तत्वशास्त्रस्य जिज्ञासाविषयमात्रंऽभूत्। परं तु विंशतिशतमानस्य

प्रथमविंशतिवर्षेषु ऐन्स्टन् महाभागस्य सापेक्ष्यतावादः कालदेशयोः स्वतन्त्रौ आयामौ इति विचारः दूरोत्सारितः। अन्ततः विश्वं आकाशस्य आयामत्रयं कालस्य च अपरमायामं आहत्य चतुरायामाः इति विचारः प्रसारितः ऐन्स्टन् महाभागेन। वादोऽयं देशकालमेयत्वं अनिर्दिष्टं (न शक्यते निश्चयेन कथयितुमिति) प्रेक्षकचलनानुसारोऽयमिति वा कथयन्ति। ऐनस्टन् वादः विकसनविश्वं प्रतिपादयति। अनन्तरं Hubble महोदयस्य परिवीक्षणेन ग्यालक्सीनां वर्णपङ्क्तिं दृष्टवा च तारागणानां अस्मत्सकाशात् दूरं सञ्चलति इति वादारंभोऽभूत्। पुनः सृष्टिविचारः विश्वस्य कदाऽभूत् इत्यादि विचारा अपि परिशीलनां गतिं प्रापुः। हबलप्रयोगैः इदं अवगतमभूत् । विश्वमिदं पुरा अतिसूक्ष्मरूपमासीत्। अनन्तरं कथञ्चित् स्फोटमभूत्। तत्स्फोटः BIG BANG नाम्ना प्रसिद्धोऽभूत्। अनन्तरं स्फोटकेन्द्रात् द्रव्यराशिः वेगेन चलन्नेव तारागणं, सूर्यचन्द्रभूम्यादिरूपैः सौरमण्डलं व्यरचि। अनेन कालः सादिः न तु अनादिः इति वादः मण्डितः।

अनादिर्मा भवतु कालः अनन्तो वा। आकाशोऽपि अनन्त इति प्रश्नयोः उत्तरावपी न लब्धौ परिपूर्णतः। अत्र FREEDMAN महोदयाभिप्रायानुसारतः देशकालौ सादी। अनन्तत्वं तु गुरुत्वाकर्षणाधीनं तस्य बलात् विश्वमिदं अनन्तकालपर्यन्तं विकसितो भविता तस्मात् प्रायः देशकालावनन्तौ इति सविकल्पकवादः मण्डितः।

विज्ञानरीत्या विज्ञानिपरीक्षिताकाशे असंख्याताः ग्रहनक्षत्राणि ग्यालक्स्यादयः सन्ति। एतत्सर्व वैदिकमतरीत्या भूताकाशमेव। अतस्तद्विज्ञानिवर्गस्य बाह्याकाशविज्ञाने यत्साधितं तदनुपमं आश्चर्यतमं अभिनन्दनीयं च।

## कालमापनम्

अर्वाचीनविज्ञानानुसारेण “atom” नामककालं कनिष्टतमकालमिति वदन्ति। अयं कालः “Second” कालस्य $\frac{15}{94}$ भागः। “Atomic” कालमापकयन्त्रा अद्य प्रचलिताः। “Second” लक्षणं तु एवमुक्तम्। अर्वाचीनरीत्या कालविभागः प्रत्येकं प्रदत्तम् परिशिष्टे। “Second” कालमपि $10^{-24}$s पर्यन्तं विभक्तम्। $\left(\frac{1}{1000000000000000000000000}\right)$ अहोऽस्माकं विज्ञानिनां बुद्धिचातुर्यं यत्कनिष्टतमकालं “Second” अपि $\frac{1}{10^{-24}}$ पर्यन्तं विभक्तं। अभिनन्दयामः तेषां कौशल्यम्। एवमेव $10^{18}$s कालं 32 billion years इति वदन्ति। (roughly 32 billion years, more than the age of Universe on current estimates).

कालस्यानादिं न वदन्ति विज्ञानिनः। कथञ्चित् आनन्त्यं मन्यन्ते (“Big Bang Theory” महास्फोटवाद) प्रकारेण यदीदं विश्वं नैव सङ्कुचिष्यति विकसिष्यति चेत्।

अर्वाचीनरीत्या कालमापनं परिशिष्टे दत्तम् ।

## ४.३ महास्फोटवादः (The Big Bang Theory)

महास्फोटवादः (The Big Bang Theory) अस्य विश्वस्य आरम्भे किमभूत् इति प्रश्नस्य परिहारप्रयासः। अर्वाचीनभौतिकखगोलविज्ञानं अस्य विश्वस्यादिं निःसंशयतया साधयति) तत्पूर्वं (आदेः) न किञ्चनासीत्। ततः परं तदा च किञ्चन सृष्टं तदेवेदं विश्वम् वादोऽयं इममेव वर्णयति। 13.7 बिलियन् वर्षपूर्वं विश्वमिदं अस्तित्वं ‘‘एकतः’’ (singularity) प्राप इति वैज्ञानिकानां निश्चितवादः। किमिदं एकत्वं कुतः समागतः (एकतंः - Singularity) इति प्रश्नस्य प्रामाणिकतया यदि चिन्त्यते अस्माकमुत्तरं तु ‘‘न जानीम’’ इति। एकत्वानि खलु (Singularities) प्रचलितभौतविज्ञानप्रणाडिकां निराकुर्वन्ति

(defy). । ते (singularities) खलु ''कृष्णरन्ध्राः'' इति कथ्यमानेषु प्रदेशेषु संतीति चिन्तनमस्ति विज्ञानिषु मध्ये। ''कृष्णरन्ध्राः'' खलु महत्तमगुरुत्वाकर्षणक्षेत्राणि। तत्र गुरुत्वाकर्षणशक्तिसञ्चयः परिमितानपि पदार्थान्, द्रव्याणि अपरिमितान् सान्द्रान् विपरिणमंति । इमे एव अपरिमितसान्द्रभागाः एकत्वानि नाम (Singularities) इति कथितानि। विश्वमिदं आरम्भे कश्चन अनन्ताणुपरिमाणत्वेन (Infinetesimelly smell), अनन्तसान्द्रवत्, अपरिमितोष्णवत् भूत्वा बभूवेति अयं वादः (a singularity) कुतः इदं समभवत् इति न जानीमः। किमर्थं प्रतीतं आयातं समभवत् इति न जानीमः। किमर्थं प्रतीतं आयातं अपि न जानीमः।

एवं प्रतीत्यनन्तरं, शनैः शनैः आपाततः विस्तृतः, शैत्यीकृतः Big Bang यदद्य दृश्यते तद्रूपं विश्वं विपरिणमितमिति स्थितिः। वयं सर्वे अस्मिन्नेव विश्वे स्थिताः यत् अद्यतनपर्यन्तं शैत्यीभवन्नेवास्ते। तत्रैव असंख्यातजीवाः तत्परीतश्च शतशो कोटिशो नक्षत्राणि सन्तीत्यतीतिविस्मयं सुन्दरं च। अस्य विश्वरूपकार्यस्य कारणानि तु'' न विद्मः। अयमेव Big Bang वादः।

**महास्फोट (Big Bang) वादस्य साधकांशाः**

(१) विश्वमिदं सादि इति प्रायः वयं अङ्गीकुर्मः।

(२) Galaxies अस्मत्तः बहुदूर बहुवेगेन चलन्तीव दृश्यन्ते। इमं नियमं Hubble's नियमं इति हबलविज्ञानिनाम्ना प्रचरितं येनेदं आविष्कृतम् (1929) वर्षे। अनेन नियमेन विश्वमिदं पूर्वं सङ्कुचितमासीत् इति ज्ञायते।

(३) विश्वसुष्टेः प्राक् यन्महदुष्णमभूत् तस्य परिणामः अद्यापि विश्वतः परीतः परिणामेन ऋणात्मकतया (–454.765° FOR – 270.425°C) अस्तीति दृष्टचरः विज्ञानिभिः।

(४) अन्तिमतया विश्वे अद्य हैड्रोजन् हीलियम् नामक लधुमूलद्रव्याणि (अनिरुस्पणि) विशेषतः सन्ति इत्येतत् B.B. वादं पुष्टीकरोति'' इति। यद्यपि B.B. वादः विज्ञानिजनप्रिय वादः तथापि तदनङ्गीकुर्वाणा अपि सन्ति यथा Robert Gentry (In 2003) महास्फोट वादः ईश्वरास्तित्वमपि प्रस्तावयति। यतः अस्य वादस्य विषये स्वयं विज्ञानिनः विवदन्ति नैकमतवन्तश्च ते। नहीदं विश्वं स्रष्टुं स्वयं शक्यते। तस्येशिता कश्चित् भूयादित्यपि विचारशीलाः विचारयन्ति। **तदिदं चिन्त्यम्।**

## ४.४ जीवविज्ञाने विविधजीववर्गाणां संख्या।।

अस्माभिः वासितायां पृथिव्यां २०१० क्रि.श. पर्यन्तं निम्नलिखित विविधजीवजातयः विज्ञानिभिः निर्दिष्टाः (Identified) तथापि प्रतिशतं ७५-९० जीवजातं अद्यतनपर्यन्तं सम्पूर्णतया न निर्दिष्टम्। (Yet to be identified 75-90%) विज्ञातजीवजातप्रकारस्तु एवं वर्णितम्।

| **वर्गाः Category** | **जीवजातिसंख्या** | **आहत्य** |
|---|---|---|
| **I. Vertebrate animals** | | |
| Mammals स्तनिनः | 5490 | |
| Birds (पक्षिणः) | 9398 | |
| Reptiles (सरीसृपाः) | 9084 | |
| Amphibiochs (भूजलवासिनः) | 6433 | |
| Fishes (मत्स्यजातीयाः) | 31300 | |
| **Total Vertebrates** | | **62305** |

| | | | |
|---|---|---|---|
| **II** | **Invertebrate animals** | | |
| | Insects कीटाः | 10,00,000 | |
| | Spiders & seropions (वृश्चिकादयः) | 102248 | |
| | Molluses मृद्वङ्गिनः | 85000 | |
| | Crustacens | 47000 | |
| | Corals हवळाः | 2175 | |
| | Others इतरे | 68827 | |
| | Total Invertebrates | | **1305250** |
| **III** | **सस्याः Plants** | | |
| | Angio species (पुष्पयुक्ताः) | 281821 | |
| | Conigers (शंखाकृतिवृक्षाः) | 1021 | |
| | Ferns & horse tails | 12000 | |
| | mosses | 16236 | |
| | Red & green algae | 10134 | |
| | Total Plants (सस्याः) | | **321212** |
| **IV** | **Others (इतरे जीवाः)** | | |
| | Litchens (शिलावल्काः) | 17000 | |
| | Mushrooms | 31496 | |
| | Brown algae | 3067 | |
| | Total others | | 51563 |
| **V** | **सर्वं जीवजातम् (I + II + III + IV)** | | **1740330** |

एते तु जीवजातयः। प्रत्येकं यदि संख्यायन्ते ते एकस्मिन् समये असंख्याता एव भवन्ति।

अस्मिन् विश्वे ६०० कोटिमनुष्यजनसङ्ख्या वर्तते। प्रतियुवशरीरं १०० trillion जीवकणैः निर्मितम्। विज्ञानिज्ञातविश्वे यावत्संख्याकनक्षत्राणि सन्ति तावत् संख्याकाः जीवकणाः प्रतिमनुष्यशरीरे सन्ति। इदमाश्चर्यं तथापि सत्यमेव। अस्याः भूमेः मुखभागे कति संख्याकाः सूक्ष्माणुजीवाः सन्ति? (Bacteria नामकः)। नायं गणयितुं सुकरः तथापि William B. Whipman महाभागेन भूमौ बाह्यभागे 5 x $10^{30}$ संख्याका सूक्ष्माणुजीवाः (Bacteria) सन्तीति ऊहितवान् (Estimeted). (5 million trillion trillion). (5000,000,000,000,000,000,000,000,000,000) । अपि च एकस्यां gm मृत्तिकायां 40 million सूक्ष्माणुजीवाः (bacteria) सन्तीति विज्ञानिनां मतम्।

(Source: National Academy of Sciences)

Virus इति ख्यातजीविनः (?) प्रतिभूमिस्थब्याक्टीरियायां दश सन्ति ; भूमौ तु सम्भूय 10,000,000,000,000,000,000,000,000,000,000 सन्तीति श्रूयते।

यद्यपि आपाततः एते एकस्मिन् निर्दिष्टसमये संख्याता भवन्ति। परं एकवर्षे, मासे वा यदि गणिताः तेषां संख्या असंख्याता एव। अनन्ता एव।

किं च भूमौ कतिसंख्याकाः कीटाः सन्ति ? इदमपि पूर्ववदेव। निर्दिष्टकाले भूमौ $10^{18}$ संख्याकाः कीटाः सन्ति इति वदन्ति। प्रतिमनुष्यशरीरे 1.5 billion bug नामककीटाः सन्तीति Alex Levinton वदति। विज्ञानिनां संशोधनेन जीवजातसंख्याः याः सन्ति इति मन्यन्ते ताः 2 million - 100 million इति। अनेन संख्यायाः ऊहनमपि अशक्यमिति ज्ञायते। यतः भूजलवायुप्रदेशेषु तेषां अविष्करणं अत्यन्तमसुकरमिति तेषामभिप्रायः।

## जीवजातनाशः

असंख्यातजीवजातसद्भावेऽपि अरण्यनाशादिपरिसरनाशादिना प्रतिवर्षं निर्दिष्टं जीवजातं नष्टं भवति। किं बहुना आगामिपञ्चाशत् वर्षेषु यदि परिसरनाशः एवमेव भविता तर्हि वर्तमानजीवजाते 1/3 भागः नष्टो भविष्यति इति परिसरतज्ञानां जीवविज्ञानिनां आतङ्कः उद्घोषितः।

एवं स्थितेऽपि जीवजातसंख्या तु असंख्या वा अनन्ता इति उक्तं भाति। तस्मात् श्रीमदाचार्यैः अष्टशतमानात् पूर्वमेव परमाणुप्रदेशेऽपि अनन्तजीवजातं विद्यते इति। उक्तम् । तद्यथा

**''परमाणुप्रदेशेऽपि ह्यनन्ताः प्राणिराशयः।''**

-विष्णु तत्वनिर्णयोक्तस्कान्दवचनम्

यदि एकैकपरमाणुप्रदेशे अनन्तजीवराशयः सन्ति तर्हि सर्वत्र भूमौ बाह्ये जले, वायौ सर्वं संभूय अनन्तजीवजातस्य विषये न कोऽपि संशयगन्धः वर्तते इति स्पष्टतया वक्तुं शक्यते। विज्ञानिभिर्यदुक्तं तत्केवलं अस्मिन् भूजलप्रदेशजीवसंख्याविचारः। यदि चतुर्दशलोकस्थितसर्वजीवसंख्याविचारः निर्दिष्टैककालेऽपि क्रियते तर्हि जीवसंख्यानन्त्यविषये न सन्देहगन्धः विद्यते इति विज्ञानतत्वज्ञानग्रन्थाधिगमेन सुतरां ज्ञायते। तस्मात् जीवानन्त्यप्रमेयं नासंभावितं किन्तु स्वाभाविकमिति।

**।। इति चतुर्थोऽध्यायः ।।**

---

# उपसंहारः

एतावता प्रबन्धेन निरूपितविषया एवं सन्ति।

(१) **प्रथमेऽध्याये** अनन्तशब्दः बह्वर्थसम्पन्नः यस्य त्रिंशत्यधिका अर्था उक्ता अमरादिविविधकोशेषु। शब्दोऽयं त्रिषु लिङ्गेष्वपि प्रवर्तते।

पुंसि विष्णु-शेषादिदेवतार्थाः, जैनमतस्य कश्चित् जिनः पिप्पलादिवृक्षार्था ;

स्त्रियां पार्वतीपृथिवीजनमेजयपत्नी-दूर्वाद्यनेकसस्यार्थाश्च

क्लीबे आकाशं, परंब्रह्मेत्याद्यर्थाश्चोक्ताः।

किं च अनन्तपदयुक्तपदान्यपि दशाधिकानि, अनन्तवीर्यं, अनन्तजित् अनन्तविजयमित्याद्यान्यऽपि तत्र तत्र दृश्यन्ते।

(२) अनन्तशब्दनिष्पत्तिप्रकारं दर्शितं व्याकरणरीत्या यत्र बहुव्रीहिसमास-करणस्य साधुत्वं सम्प्रदर्शितम्। अपि च आनन्त्यशब्दस्यापि निष्पत्तिः प्रतिपादिता शब्दशास्त्ररीत्या।

(३) किं च वैदिकग्रन्थेषु अनन्तशब्दार्थान्वेषणं यदा कृतं तदा विष्णु-लक्ष्मी-दुर्गा-तुलसी-शेष-गरुड-निरवधिरित्याद्यर्थाः लब्धाः विविधपुराणेषु।

भागवतादिपुराणेषु अनन्तशब्दयुक्तशब्दा अपि दृष्टाः यथा-अनन्तज्ञान-शक्ति-बल-वीर्य-सुख-दुःखानि इत्यादयः। एतेषां मध्ये भगवतो अनन्तकर्मज्ञानानन्दशक्तिबलवीर्यवत्त्वं, केषञ्चित् जीवादीनां कल्यादीनां अनन्तदुःखादिकं सम्प्रदर्शितम्। कर्माणि तु अनन्तानि सर्वेषां चेतनानां निरूपितानि।

**द्वितीयाध्याये** अन्यान्यदर्शनेषु निरूपितविविधानन्त्यं तेषामेव ग्रन्थानुरोधेन सम्प्रदर्शितं यथा (१) जैनमते जीवकर्मसुखदुःखानन्त्यं, अलोकानन्त्यं (२) न्यायवैशेषिकमते विशेष-जीव-मनसामानन्त्यं (३) विशिष्टाद्वैतमते ब्रह्मणो गुणानन्त्यं, जीवानां संख्यानन्त्यं (४) अद्वैतदर्शने अध्यासानन्त्यं, (५) पातञ्जलमते ज्ञानानन्त्यमित्यादयः।

**तृतीयाध्याये** द्वैतमतोक्तानन्तप्रकाराः वर्ण-वेद-मन्त्र-कालदेश-जीव-विशेषाद्यानन्त्यं सप्रमाणं निरूप्य तेषां तारतम्यमपि निरूपितम्। अनन्तरं ब्रह्मणो नारायणस्य देशकालगुणानन्त्यं सूपपादितम्। तस्य च वस्त्वानन्त्यं निराकृतम्। तदर्थं नैर्गुण्यवादोऽपि निराकृतः। किं च एतेषां प्रमेयाणां प्रमाणमीमांसा मतत्रयसमीक्षा च युक्तिशब्दयुक्ता विमृष्टा।

एवं गुणानन्त्ये ब्रह्मणो साधिते सति साधकैः कर्तव्यरूपोपासनं गुणोपसंहारवैविध्यं (एक-चतुर्गुण-बहुगुण-अनन्तगुणोपासनारूपं) प्रतिपादि-तम्। तदनेनैव मोक्षो भवेदिति अनन्तरं प्रतिपादितम्।

**चरमेऽध्याये** अर्वाचीनविज्ञानेषु गणित-भौत-जीव-खगोल-विज्ञानेषु आनन्त्यविषयावसरः अस्ति वा न वेति निरूपितः। तत्रापि गणितशास्त्रे आनन्त्यनिरूपणं सुष्ठु दृश्यते। इतरशास्त्रेषु विचारः अपर्याप्तो दृश्यते। (Insufficient). यथा भौतशास्त्रे आकाशकालयोः अस्तित्वविषय एव सन्दिग्धः, कुतस्तस्यानन्त्यम्। तथापि आविष्काराणि आनन्त्यस्य समीपे सञ्चरन्तीति भाति। (Research datas tend to ∞) भविष्यदाविष्काराः आनन्त्यप्रतिपादने बृहत्साधनत्वपदं अलङ्करिष्यन्तीति मन्ये।

## किमिह अपूर्वं प्रबन्धे

१) प्रथमतः आनन्त्यविषयकः प्रबन्ध एव अपूर्वः यत इतः पूर्वं तादृशप्रबन्धः नैव मण्डितः इति "Directory of Doctoral Dissertations on Sanskrit of Indian Universities" ग्रन्थेन ज्ञायते। (Editor

Prof. K.V. Sarma, Publisher Rastriya Sanskrit Sansthanam, New Delhi - 2007)

२) अनन्तशब्दस्य रूढ्यर्थाः त्रिंशत्यधिकाः तत्रापि बहवो ''अनन्ता'' इति सस्यानि सन्ति येषां वैद्यकीयोपयोगाः रोगपरिहारकाश्च। सामाजिकेषु वर्गेषु अनेन प्रबन्धेन वैद्यकीयोपगिता आविष्कृता स्यात् इति अपूर्वमिति मन्ये।

३) जैनादिषु नानादर्शनेषु आनन्त्यविषये विषयाः अत्र यद्यपि सङ्गृहीताः। अथापि द्वैतविषये आनन्त्यं समग्रमिव प्रत्यपादि।

४) आनन्त्यनिरूपणं यद्यपि द्वैतग्रन्थेषु तत्र तत्र अस्त्येव। तथापि तस्यैकत्र संग्रहः विक्षिप्तसंगहादिनिरूपणमपूर्वमिति मन्ये। यथोक्तं श्रीव्यासतीर्थैः।

''अनुक्तकथनात्क्वापि क्वाप्युक्तस्योपपादनात्। विक्षिप्तसंग्रहात्क्वापि सफलोऽयं श्रमो मम॥''

५) विज्ञानिभिरर्वाचीनैः तत्र तत्र आंशिकतयोक्तः आनन्त्यविचारः सम्प्रदर्शितः यथा गणितशास्त्रे।

एवमयं प्रबन्धः अर्वाचीनप्राचीनशास्त्रयोः सेतुरिव निर्मित इति अपूर्वता।

### किमग्रे कर्तव्यम्

१) यद्यपि अस्मिन् विषये सङ्ग्राह्यः प्रारम्भः केवलं मया कृतः। परं शोधनीयश्च परिष्कर्तव्यश्च विषयः बह्ववशिष्टः।

२) अन्यान्यदर्शनानां सविमर्शाध्ययनं आनन्त्यविषये।

३) द्वैतमतोक्तसर्वशब्दवाच्यत्वस्य भगवतः गुणपूर्णत्वविषये विशेषाध्ययनम्। (शब्दप्रवृत्तिनिमित्तानां गुणप्रतिपादनविषयाणामध्ययनम्)

४) उपलब्धशास्त्राधारैः वेदादिषु ग्रन्थेषु भगवद्गुणगवेषणम् (संख्याया)। यद्यपि मनुष्याणां तदशक्येऽपि ज्ञानमात्राधिकारसद्भावात् यावच्छ्यक्यं

तावद्गुणान्वेषणं कार्यमेव । (अस्यां ऋचि अयं गुणः इमे गुणाः प्रतिपादिता इत्यादि)।

५) वैदिकवैज्ञानिप्रपञ्चे आनन्त्यविषये तुलनात्मकाध्ययनं इत्यादिविषयाः अग्रे अध्ययनयोग्या इति मन्ये।

---

# प्रबन्धकृतिसमर्पणम्

देशकालसमव्याप्तां चिदानन्दस्वरूपिणीम्।
ज्ञानभक्त्यादिदात्रीं च ब्रह्मेशानपदप्रदाम्॥

यथाऽऽकाशनृपः प्रादात् नाम्ना पद्मावतीं सुताम्।
वेङ्कटाद्रिनिवासाय श्रीनिवासाय विष्णवे॥

अनन्तायाप्रमेयाय सदा षोडशवर्षिणे।
अवृद्धाय प्रवृद्धाय जगज्जन्मादिदायिने ॥

विश्वविद्यालयाख्याय वेङ्कटाद्रिस्थिताय वै।
वराय श्रीनिवासाय विद्वत्कुमुदबन्धवे॥

प्रीत्या संवर्धितां कन्यां नाम्नानन्तां सुरूपिणीम्।
सत्प्रबन्धस्वरूपां तामर्पये प्रीयतां हरिः॥

नानादर्शनवल्लभां शुभगुणैः संभूषणैर्भूषितां
श्रीमन्मध्वमताभिधे निजगृहे संवर्धितां कन्यकाम्।
दास्येऽनन्तपदाभिधां गुणिवरे विद्वद्गुणैरञ्चिते
श्रीमद्वेङ्कटपर्वते विलसिते सद्विश्वविद्यालये॥

अनन्तगुणपूर्णाय दोषदूराय विष्णवे।
अर्प्यतेऽनन्तसन्नामा प्रबन्धोऽयं मया मुदा॥

**॥ श्रीकृष्णार्पणमस्तु ॥**

# परिशिष्टं - १

## अनन्तशब्दवाच्यानां ओषधिशब्दानां अर्थाः तेषामुपयोगश्च

| क्र.सं | सस्यनाम | कन्नड अर्थः | अर्थः | सस्यशास्त्रनाम | ओषधिः उपयोगः कस्य शमनार्थं |
|---|---|---|---|---|---|
| १) | पथ्या-हरीतकी | ಅಳಲೆಗಿಡ (ಮರ) | Chebulic myrobalan | Terminalia Chechebula Retz. | Wound, Ulcer, inflammation, Jaundice, cough, Diseases, leprosy, cardiac disorders, general debility etc. |
| 2) | दन्ती | ಜಾಪಾಳದಗಿಡ | | Baliospesmum montanum (Wild) Muell-Arg | Constipation, jaundice, leukoderma, fever, seeds arepurgative etc. |
| 3) | आमलकी अमृतफला धात्री | ನೆಲ್ಲಿಮರ | Gooseberry | Phyllanthus emblica linn. | Constipation, stomatitis, jaundice, disorders of vision, fever, cough, weezing, cardiac disorders and general weekness, Useful parts: Root, bark, leaves and fruits. |
| 4) | गुडूची | ಅಮೃತಬಳ್ಳಿ | Tinospora | Coeculus cordifolius(As per Apte) Tinospora cordifolia (wild) Mires ex. Hook. t. & Thoms | Pacifies vitiated vata, pitta, burning sensation, rheumatoid arthritis, cardiac debility, skin diseases, anemia, cough, jaundice, urinery system diseases etc. |
| 5) | पिप्पला | ಅಶ್ವತ್ಥ | Sacred fig. | Ficus religiosa Linn. | Pacifies pitta, Kapha, Skin diseases, inflammation, poison, constipation etc. |
| 6) | दूर्वा | ಗರಿಕೆಹುಲ್ಲು | Bhamagrass | Cynodon dactylon (Linn) | Pacifies pitta, kapha, burning sensation, wounds. |

| | | | | | |
|---|---|---|---|---|---|
| 7) | गुञ्जा | ಗುಲಗಂಜಿ ಬಳ್ಳಿ | Wild liquorice Indian Liquorice | Abrus pracatorius Linn | Pacifies pitta, vata, inflammation, skin disease, wounds asthama, stomatitis and fever. |
| 8) | पिप्पली | ಹಿಪ್ಪಲಿಗಿಡ ಕಾಡುಮಲ್ಲಿಗೆ | Long Pepper | Piper Longum. Linn. | Pacifies vata, lumbar pain, arthritis, asthama, bronchitis, fever etc. |
| 9) | फलिनी(प्रियांगू) | ನೀರುಹಿಪ್ಪಲಿ | | Callicarpa macrophylla (Vahl) | Pacifics vata, pitta, diarrheea, arthritis, burning sensation, Ulcers, poisonous bites, blackish discolouretion on face. |
| 10) | शंखपुष्पी शंखिनी | ಕಡಿಯಾಲದ ಗಿಡ | Canscora | Canscora decussate (Roxb) schult | Pacifies kapha, insanity, nervine debility, pain, ulcer, worms, abdominal disorders etc. |
| 11) | शारिबा(वा) (अनन्तमूलं) | ಸೊಗದೆಗಿಡ | Indian Sarasaparilla | Hemidesmus Indicus (Linn) R.Br. | Pacifies vitiated pitta, vata, skin diseases, burning sensation, leukoderma, bronchitis, asthama diarrhea, arthritis etc. |
| 12) | सिन्दुवार: | ಲಕ್ಕಿಗಿಡ | White chaste tree | Vitex trifolia Linn. | Pacifies Vata, kapha, arthritis, inflammation, headache dysentry, wounds, ulcers, etc. |
| 13) | रोचनी (रेचनी) (त्रिवृत्) | ಜಾಪಾಳ ಕೆಂಪು ತಿಗಡೆ ಮರ | Indian jalap | Operculina turpethum (Linn) Silva Manso | Pacifies vata, pitta, constipation, arthritis, inflammation, fever, jaundice and tumours etc. |

## परिशिष्टं - २

# वेदानन्त्ये प्रमाणवचनम्

## अनन्ता वै वेदाः

### तैत्तिरियब्राह्मणं (३-१०-११-३, ४)

''भरद्वाजो हि त्रिभिरायुर्भिर्ब्रह्मचर्यमुवास। तं हि जीर्णं स्थविरं शयानं इन्द्र उपव्रज्य उवाच। भरद्वाज, यत्ते चतुर्थं आयुर्दद्यां किमनेन कुर्या इति। ब्रह्मचर्यमेव अनेन चरेयमिति होवाच। तं ह त्रीन् गिरिरुपान् अविज्ञातान् इव दर्शयांचकार। तेषां ह एकैकस्मात् मुष्टिमाददे। स होवाच भरद्वाज इत्यामन्त्र्य। वेदा वा एते। **अनन्ता वै वेदा।** एतद्वा एतैस्त्रिभिरायुभिः अन्ववोचेथाः। अथ त इतरदनुक्तमेव।।

**सायणभाष्यम्**[1]

''पुरा कदाचिद्भरद्वाजाख्यो महर्षिः सर्वेषां वेदानामध्ययने कृतप्रयत्न इन्द्रं प्रसाद्य तत्प्रसादात् शतसंवत्सरपरिमितानि त्रीण्यायूंषि लब्ध्वा तैरायुर्भिः ब्रह्मचर्यमुवास वेदाध्ययनमुद्दिश्य गुरुकुले वासं कृतवान्। शतत्रयस्यान्ते जीर्णशरीरं वृद्धं अशक्तत्वेन शयानं तं भरद्वाजं प्रतीन्द्र उपेत्योवाच। यच्चतुर्थमायुस्तुभ्यं दद्यामेतेन आयुषा किं कुर्याः कं पुरुषार्थं साधयसीति। स च वेदाध्ययनमेव करिष्यामीत्युवाच । ततः सर्ववेदाध्ययनकृतवंन्तं तं भरद्वाजं उद्धिश्य सर्वाध्ययनस्याशक्यत्वं बोधयितुं, ऋग्यजुःसामवेदानां त्रयाणां स्वकीययोगसामर्थ्येन पर्वताकारस्त्वं संपाद्य गिरित्रयरूपान् पूर्वमविज्ञातानेव वेदानस्मै दर्शयामास। ततस्तेषां पर्वतानां मध्य एकैकस्मातन्मुष्टिना पांसूनाददे। आदायैवमुवाच - हे भरद्वाज, एते त्रयः पर्वताः वेदा एव। तत्रैकैकः पांसुरेको वेदः तस्मादनन्ता वेदास्तेषां मध्ये त्वमेतैस्त्रिभिः आयुभिः एतन्मुष्टित्रयपरिमितं

---

१. स.भा. पृ. १३५१

वेदजातं गुरुपदेशं अन्वधीतवानसि। अथानन्तरं तवेतरद्वेदजातमनधीतमेव। तस्मात्सर्ववेदाध्ययनमशक्यमेव। यदि सर्वाध्ययनफलमपेक्षितं तर्हि आगच्छेमं सावित्रमग्निं विद्धि ध्यानेन साक्षात्कुरु। अयमेव सावित्रोऽग्निः सर्ववेदविषया विद्येत्येवं बोधयित्वा तस्मै भरद्वाजायैतं सावित्रमग्निं पूर्वोक्तप्रकारेणोवाच । ततः स भरद्वाजस्तं सावित्रमग्निं ध्यानेन स्वात्मतया साक्षात्कृत्य तदग्निरूपः स्वयममृतो देवा भूत्वा वर्तमानदेवादूर्ध्वं स्वर्गं प्राप्य तत्राऽऽदित्यसायुज्यं प्राप्तवान्।''

इत्यमुपाख्यानेन विद्यामहिमानं दर्शयित्वा भरद्वाजवदन्यस्यापि वेदितुः तत्फलं दर्शयति

''अमृतो हैव भूत्वा। स्वर्गं लोकमेति।
आदित्यस्य सायुज्यं। य एवं वेद, एषो एव त्रयी विद्या (५)।

यावन्तञ् ह वै त्रय्या विद्यया लोकं जयति। तावन्तं लोकं जयति। य एवं वेद।''

*****

## परिशिष्टं - ३

## कालानन्त्यविज्ञप्त्यै पुराणादिनिरूपितकालविभागः

१) परमाणुकालः

२) द्वौ परमाणू = द्व्यणुककालः

३) त्रयो द्व्यणुकाः = (त्रसरेणुः) त्र्यणुकःकालः

४) त्रसरेणुत्रिकं = त्रुटिः

५) तिस्रः त्रुट्यः = वेधः

६) त्रयो वेधाः = लवः

७) त्रिलवः = निमेषः

८) त्रयो निमेषाः = क्षणः

९) पञ्च क्षणाः = काष्ठा

१०) पञ्चदशकाष्ठाः = लघु

११) पञ्चदशलघूनि = नाडिका (घटिका = २४ निमेषाः) (Minutes)

१२) द्वे नाडिके = मुहूर्तम्

१३) षण्णाडिकाः = प्रहरः

१४) सप्तनाडिकाः = यामः

१५) चत्वारः यामाः = अहः

१६) चत्वारः यामाः = रात्रिः

१७) अहोरात्रम् = दिनम्

१८) पञ्चदशाहानि = पक्षः (शुक्तः / कृष्णो वा)

१९) द्वौ पक्षौ = मासः

२०) द्वौ मासौ = ऋतुः

२१) षण्मासाः = अयनम् (दक्षिणं-उत्तरम्)

२२) द्वे अयने = वत्सरः (दिवि अहोरात्रे)

२३) सौरमासरीत्या द्वादशमासाः = संवत्सरः

२४) द्वादशराशिशु बृहस्पतेरावृत्या = परिवत्सरः

यः तिष्ठति सः

२५) सप्तविंशन्नक्षत्राणि तद्द्वादशमासेषु स्थितः = इडावत्सरः

२६) तिथीनां द्वादशावर्तो यो द्वादशमासरूपः = अनुवत्सरः

२७) अह्ना षष्ठ्युतुरशतत्रयात्मकद्वादशमासेषु स्थितः = वत्सरः

२८) नृणां परमायुः = वत्सरशतम्

२९) नृणां त्रिशतं सषष्टिकं वत्सरम् = देवानां एकवत्सरम्

३०) मनुष्य - मानेन चतुर्युग परिमाणम् = १२,००० ह्न ३६० = ४३२०००० वत्सराः

३१) कृतयुगप्रमाणम् ४,८०० ह्न ३६० = १७,२८,००० वत्सराः

त्रेतायुगप्रमाणम् ३,६०० ह्न ३६० = १२,९६,००० वत्सराः

द्वापरयुगप्रमाणम् २,४०० ह्न ३६० = ८,६४,००० वत्सराः

कलियुगप्रमाणम् १,२०० ह्न ३६० = ४,३२,००० वत्सराः

आहत्य चतुर्युगप्रमाणम् ४३,२०,००० वत्सराः

वि.सू. :ह्न अत्र कृते ८०० वत्सराः (२,८८,००० मानुषवत्सराः) पूर्वोत्तरसन्धिकालः। एवं त्रेतायां ६०० वत्सराः (२,१६,००० मा.व.)। द्वापरे ४०० वत्सराः (१,४४,००० मा.व.)। कलौ च २०० वत्सराः (७२,००० मा.व.) इति कालज्ञाः॥

३१) एकसप्ततिमहायुगम् (चतुर्युग) = एकं मन्वन्तरम्

३२) चतुर्दशमन्वन्तराणि = कल्पः

३३) तावदेव चतुर्दशमन्वन्तराणि = ब्रह्मणो अहः = ४,३२,००,००,००० वत्सराः

३४) सहस्रवारमावृत्तम् चतुर्युगम् = ब्रह्मणो अहर्दिनम् = ४,३२,००,००,००० वत्सराः

३५) सहस्रवारमावृत्तम् तावदेव = रात्रिः

३६) संहत्य दिवानिशम् = ८,६४,००,००,००० (मनुष्याणां वत्सराः)

३७) ब्रह्मणः एकः वत्सरः = ८,६४,००,००,००० ह्न ३६०

३८) ब्रह्मणः शतवत्सराः = ८,६४,००,००,००० ह्न ३६० ह्न १००

ब्रह्मणः परार्द्धकालः = १५,५५,२०,००,००,००,०००

३९) अयमेव कालः कालनामक परमात्मनः = निमेष इति उपचर्यते।

४०) परममहान् कालः = त्रिकालव्याप्तः

सकलजगज्जीवजनकस्य ब्रह्मणो परनाम पूर्णायुरेव नारायणस्य निमेषक इति उपचर्यते। तदुक्तं श्री भावप्रकाशिकायां निमेषकशब्दे कप्रत्ययकृत्यपरीक्षावसरे।

''अस्मदादिवत् निमेषपरिसंख्यया आयुः परिगणने भगवतोऽपि सावधिकमायुः स्यात्। अतः सोऽयं निमेषो हरेरुपचारादेव न तु स्वभावादिति तमिमं निमेषं कुत्सयितुम्। अत एव ''निमेष उपचर्यते'' इत्याह बादरायणः। ब्रह्मणः संवत्सरशतकस्य पर इति नाम। तच्च सृष्टिकाल इव प्रलयकालेऽपि समम्। -श्रीवादिराजतीर्थाः

कोष्टकस्य आधारग्रन्थाः।

(१) भागवत III-12 (1-29)

(२) म.ता.नि. III-30 (39)

(३) श्रीवादिराजतीर्थीय भावप्रकाशिका (अ. 1 & 3)

## परिशिष्टं - ४

# अर्वाचीनकालपरिगणनम्

The most accurate time keeping devices are ATOMIC CLOCKS which are accurate to seconds in many millions of years and are used to calibrate this cloths and time instruments. ........... .............. .......... ............

As of 2006, the smallest unit of time that has been directly measured is on the attosecond ($10^{-18}$s) time scale, or around $10^{26}$ **Planck times.**

Definitions and standards

**Units of time**

| Unit | Size | Notes |
|---|---|---|
| yoctosecond | $10^{-24}$s | |
| zeptosecond | $10^{-21}$s | |
| attosecond | $10^{-18}$s | shortest time now measurable |
| femtosecond | $10^{-15}$s | pulse time on fastest lasers |
| picosecond | $10^{-12}$s | |
| nanosecond | $10^{-9}$ s | time for molecules to fluoresce |
| microsecond | $10^{-6}$ s | |
| millisecond | 0.001s | |
| **second** | **1s** | **SI base unit** |
| minute | 60 seconds | |
| hour | 60 minutes | |
| day | 24 hours | |
| week | 7 days | Also called **sennight** |

| | | |
|---|---|---|
| fortnight | 14 days | 2 weeks |
| lunar month | 27.2-29.5 days | Various definitions of lunar month exist. |
| month | 28-31 days | |
| quarter | 3 months | |
| year | 12 months | |
| common year | 365 days | 52 weeks + 1 day |
| leap year | 366 days | 52 weeks + 2 days |
| tropical year | 365.24219 days | average |
| Gregorian year | 365.2425 days | average |
| Olympiad | 4 year cycle | |
| lustrum | 5 years | Also called **pentad** |
| decade | 10 years | |
| indication | 15 year cycle | |
| generation | 17-35 years | approximate |
| jubilee (Biblical) | 50 years | |
| century | 100 years | |
| millennium | 1,000 years | |

Source : Internet

## परिशिष्टं - ५

# Our Universe- As per Modern Science

1. Universe was formed after Big Bang explosion which took place 10-15 billion years ago. Space, time energy and matter all came into existance then. The matter released during the explosion led to the formation of galaxies which were great masses of stars. The sun is one of those stars in the galaxies that formed during the explosion.

2. A galaxy is a cluster of stars held together by the force of gravity. Astronomers have estimated that there are nearly 20 trillion galaxies scatters throughout space.........

3. There are mainly four types of galaxies spiral, barred, elliptical and irregular. Spiral galaxies look like pin wheels having a dense core of stars surreounded by long whirling arms, for e.g., the milky way.

4. Biggest galaxy, the Andromeda Galaxy is located near our milky way. The Milky was is 10,00,000 light years in diameter with a thickness of about 10,000 light years. There are nearly 200 billion stars in the Milky Way.

5. Solar system was formed arround 4600 million years ago.

6. Solar system consists of the sun at the centre along with eight major planets, three dwarf planets, their 155 known moons .......... these planets revolve around sun on their fixed path. The cargost planet is Jupitar and the smallest is ceres.

7. The sun is a star made up of hot glowing gases. It is made up of four layers - core, radiative zone, convective zone, the surface or the finite sphere.

8. Sun's temperature at the case is 15 million°C. Nearly 700

million tonnes of hydrogen gets converted to form helium.......

9. Our universe Les an area estimated for be at 100000 years (1 Light Year = 2 bak km/sec.) (100000 Light Years = 200000 × 100000 = 20000000000 km)

10. VOYAGER 1 space croft launched by NASA on 5-9-1977 has travelled 17.4 billion km. (10.8 billion miles) from sun & harthing towards interstellar space Voyages 1 is the farthest human made object from earth. This space tecreft has covered arround 100 times the distance between sun and earth. It is continuing to move at a speed of 17 km per second. It has gone past solar system now (beyond Neptune, pluto etc). Its last mission is to understand interstellar space and is expected to sun out of energy (i.e., batteries) by 2025 or 2030 latest.

11. The number of gallaxies estimated are arround 100 billions or so. Their distance varies, of course. The nearest galaxy to us is called "Cannis Major Dwarf" at a distance of 42000 light years i.e., at a distance which will take 42000 years for the light to cover. (113,520,00000000000 0000000 kms) the farthest knan galaxy is about 13.2 billion light years from earth (as in 2011).

[N.B. A **light – year**, also light year or lightyear (symbol: ly) is a **unit** of **length**, equal to just under 10 trillion **kilometers** ($10^{16}$ meters, 10 petamenters or 6 trillion miles). As defined by the **International Astronomical Union** (IAU), a light – year is the distance that **light travels** in a **vacuum** in one **Julian – year**

One light – year is equal to:

- exactly 9,460,730,472,580.8 **km** (about 9.5 **Pm**)

## परिशिष्टं - ६

# Solar System Data File

| | सूर्यात् दूरम् Avg. Dist. from sun (million km) | भूमेः दूरम् Distance from Earth(Kilometer) | भूमेः दूरम् Miles |
|---|---|---|---|
| Mercury बुधः | 58.00 | | 13600000 |
| Venus शुक्रः | 108.00 | | 160100000 to 25700000 |
| Earth भूमिः | 149.70 | | – 565000000 |
| Moon चन्द्र | – | 3.84 Lakh km OR 0.384 Lakh Km | 221463 – to 238853 |
| Mars मंगळः | 228.00 | | 34637000 – to 234400000 |
| Jupiter गुरुः | 778.00 | | 339000000 to 414000000 |
| Saturn शनिः | 1427.00 | | 744000000 to 1028000000 |
| Uranus | 2869.00 | | 1781900000 |
| Neptune | 4496.00 | | 2793000000 |
| Sun सूर्यः | | 150.00 Million km or 1 A.U. | 91000000 – 94000000 |

उपर्युक्तग्रहदूरैः आकाशव्याप्तिः ज्ञायते या भूमेः सकाशात् फ्लूटो पर्यन्तं ४६५००००००० मैल् पर्यन्तं सूर्यमण्डलान्तर्गताकाशः इति। सूर्यमण्डलात् बहिः यदाकाशव्याप्तिः Gallaxy इति अस्ति तत् अनेकलक्षपरिमितप्रकाशवर्षाणि इति वदन्ति विज्ञानिनः। सर्वमिदं अनन्तं इति अकथितेऽपि अनन्ताय कल्पते यदि सर्वाकाशः यदा ज्ञायते। तदेवतदव्याकृताकाशम्। तद्विज्ञानिलोकः न जानाति। **यत् ज्ञातं तत् सर्वं भूताकाशमेव।**

## परिशिष्टं - ७

# पुराणोक्तक्रमेण प्राणियोनयः

**पद्मपुराणरीत्या जीवयोनिसंख्या एवं निरूपिता।**

**"जलजाः नवलक्षास्तु स्थावराः लक्षविंशतिः।**
**क्रिमिजाः रुद्रसंख्याश्च पक्षिणां दशलक्षकम्।**
**त्रिंशल्लक्षं तु पश्वादि चतुर्लक्षंतु मानुषाः॥"**

(१)

| | | |
|---|---|---|
| १. | जलयोनिजाः | ९ लक्षम् |
| २. | स्थावराः(वृक्षादयः) | २० लक्षम् |
| ३. | क्रिमियोनयः | ११ लक्षम् |
| ४. | अण्डजाः | १० लक्षम् |
| ५. | पशुयोनयः | ३० लक्षम् |
| ६. | मानुषा | ४ लक्षम् |
| | आहत्य | ८४ लक्षम् |

(२)

| | | |
|---|---|---|
| १. | स्वेदजाः | ११ लक्षम् |
| २. | उद्भिजाः | २० लक्षम् |
| ३. | अण्डजाः | १९ लक्षम् |
| | जलचरा : | ९ लक्षम् |
| | पक्षिणः | १० लक्षम् |
| ४. | जरायुजाः | ३४ लक्षम् |
| | पशुयोनिजाः | ३० लक्षम् |
| | मानवा | ४ लक्षम् |
| | आहत्य | ८४ लक्षम् |

**(३) अद्यभेदेन योनयः**

| | | |
|---|---|---|
| १. | चान्द्रिकाभक्षाः | २ लक्षम् |
| २. | पर्णपक्षाः | ७ लक्षम् |
| ३. | मधुभक्षाः | १ लक्षम् |
| ४. | जलभक्षाः | १२ लक्षम् |
| ५. | कुणपभक्षाः | ७ लक्षम् |
| ६. | व्रीह्यादिभक्षाः | १६ लक्षम् |
| ७. | मांसभक्षाः | १२ लक्षम् |
| ८. | काष्ठभक्षाः | २ लक्षम् |
| ९. | अग्निभक्षाः | १ लक्षम् |
| १०. | वायुभक्षाः | ४ लक्षम् |
| ११. | अन्धकारभक्षाः | २० लक्षम् |

**विशेषसूचना :** एते तु विविधयोनयः प्राणिनाम् । प्रतिप्रणिनां एककाले जातानां संख्यागणने कृते सति प्रायः तत्संख्या असंख्या अथवा अनन्तो भवेत् इति कल्पयितुं शक्यते इति भाति।

## परिशिष्टं - ८

# ब्रह्मणो गुणानन्त्यसंवादि रामायणे रामगुणवर्णनम्

### बालकाण्डम् - प्रथमः सर्गः

ॐ तपः स्वाध्यायनिरतं तपस्वी वाग्विदां वरम्।
नारदं परिपप्रच्छ वाल्मीकिर्मुनिपुङ्गवम् ॥ १॥

कोन्वस्मिन् साम्प्रतं लोके गुणावान् कश्च वीर्यवान्।
धर्मज्ञश्च कृतज्ञश्च सत्यवाक्यो दृढव्रतः ॥ २॥

चारित्रेण च को युक्तः सर्वभूतेषु को हितः।
विद्वान् कः कः समर्थश्च कश्चैकप्रियदर्शनः ॥ ३॥

आत्मवान् को जितक्रोधो द्युतिमान् कोऽनसूयकः।
कस्य बिभ्यति देवाश्च जातरोषस्य संयुगे ॥ ४॥

एतदिच्छाम्यहं श्रोतुं परं कौतूहलं हि मे।
महर्षे त्वं समर्थोऽसि ज्ञातुमेवं विधं नरम् ॥ ५॥

श्रुत्वा चैतत्त्रिकालज्ञो वाल्मीकेर्नारदो वचः।
श्रूयतामिति चामन्त्र्य प्रहृष्टो वाक्यमब्रवीत् ॥ ६॥

**(नारद उवाच)**

बहवो दुर्लभाश्चैव ये त्वया कीर्तिता गुणाः।
मुने वक्ष्याम्यहं बुद्ध्वा तैर्युक्तः श्रूयतां नरः ॥

इक्ष्वाकुवंशप्रभवो रामो नाम जनैः श्रुतः।
नियतात्मा महावीर्यो श्रुतिमान् धृतिमान् वशी॥

बुद्धिमान् नीतिमान् वाग्मी श्रीमान् शत्रुनिबर्हणः।
विपुलांसो महाबाहुः कम्बुग्रीवो महाधनुः ॥ ९॥

महोरस्को महेष्वासो गूढजत्रुररिन्दमः।
आजानबाहुः सुशिराः सुललाटः सुविक्रमः ॥ १०॥

समः समविभक्ताङ्गः स्निग्धवर्णः प्रतापवान्।
पीनवक्षा विशालाक्षो लक्ष्मीवान् शुभलक्षणः ॥ ११॥

धर्मज्ञः सत्यसन्धश्च प्रजानां च हिते रतः।
यशस्वी ज्ञानसम्पन्नः शुचिर्वश्यः समाधिमान् ॥ १२॥

प्रजापतिसमः श्रीमान् धाता रिपुनिषूदनः।
रक्षिता जीवलोकस्य धर्मस्य परिरक्षिता ॥ १३॥

रक्षिता स्वस्य धर्मस्य स्वजनस्य च रक्षिता।
वेदवेदाङ्गतत्त्वज्ञो धनुर्वेदे च निष्ठितः ॥ १४॥

सर्वशास्त्रार्थतत्त्वज्ञः स्मृतिमान् प्रतिभा भानवान्।
सर्वलोकप्रियः साधुरदीनात्मा विचक्षणः ॥ १५॥

सर्वदाभिगतः सद्भिः समुद्र इव सिन्धुभिः।
आर्यः सर्वसमश्चैव सदैव प्रियदर्शनः ॥ १६॥

**स च सर्वगणोपेतः** कौसल्यानन्दवर्धनः।
समुद्र इव गम्भीर्ये धैर्येण हिमावानिव ॥ १७॥

**विष्णुना सदृशो वीर्ये** सोमवत्प्रियदर्शनः।
कालाग्निसदृशः क्रोधे क्षमया पृथिवीसमः ॥ १८॥

धनदेन समस्त्यागे सत्ये धर्म इवापरः।
**तमेवं गुणसम्पन्नं रामं सत्यपराक्रमम्** ॥ १९॥

ज्येष्ठं **ज्येष्ठगुणैर्युक्तं** प्रियं दशरथः सुतम्।
प्रकृतीनां हितैर्युक्तं प्रकृतिप्रियकाम्यया ॥ २०॥

यौवराज्येन संयोक्तुमैच्छत् प्रीत्या महीपतिः।

---

श्रीमत्वाल्मीकिरामायणम् गीताप्रेस प्रकाशनम् (वैक्रमाब्दे २०२० संवत्सरे - १९५४ पृष्ठम् ४५

## परिशिष्टं - ९

# भागवतोक्तनारायणगुणाः

### (युक्तिमल्लिकायां गुणसौरभे उदाहृताः)

समस्तधर्मशून्यत्वं तन्निर्गुणं कुत्र कथ्यते।
''सत्यं शौचं दया दानं त्यागस्सन्तोष आर्जवम्।
शमो दमस्तपस्साम्यं तितिक्षोपरतिःश्रुतम् ॥ ७०६ ॥

ज्ञानं विरक्तिरैश्वर्यं शौर्यं तेजो धृतिः स्मृतिः।
स्वातन्त्र्यं कौशलं कान्तिरसौभगं मार्दवं क्षमा ॥ ७०७॥

प्रागल्भ्यं प्रश्रयं शीलं सह आजो बलं भगः।
गाम्भीर्यं स्थैर्यमास्तिक्यं कीर्तिर्मानोऽनहङ्कृतिः ॥ ७०८॥

इमे चान्ये च भगवन्नित्या यत्र महागुणाः।
प्राथ्यार्ा महत्त्वमिच्छद्भिर्न च यान्ति स्म कर्हिचित् ॥ ७०७॥

**अत्र सुरोत्तमतीर्थटीका-**

''इदानीं स्पष्टं नारायणस्य गुणपूर्णताप्रतिपादकानि भागवतवचनान्याह - सत्यमित्यादिना।''

**अत्र भागवते श्रीधरीयटीकायां -**

श्लोक-२६ ''यत्र च सत्यादयो महागुणाः न वियन्ति। (न क्षीयन्ते स्म)..।
सत्यं यथार्थभाषणं। ........

श्लोक ३०- एते एकोनचत्वारिंशत्। अन्ये च ब्रह्मण्यशरण्यत्वादयो महान्तो गुणा यस्मिन्नित्या सहजा न वियन्ति न क्षीयन्ते स्म।

श्लोकः ३१- तेन गुणपात्रेण गुणालयेन।''

---

१. भा. पृ. ४०

२. भा.टी.श्री. पृ. ३९

## परिशिष्टं - १०

# श्रीरामानुजगीताभाष्योपोद्घातः

## (नारायणस्य अनन्तगुणवत्वे)

यत्पदाम्भोरुहध्यानविध्वस्ताशेषकल्मषः ।
वस्तुतामुपयातोऽहं यामुनेयं नमामि तम् ।।

हरिः ॐ श्रियः पतिः निखिलहेयप्रत्यनीककल्याणैकतानः, स्वेतरसमस्तवस्तुविलक्षणानन्तज्ञानानन्दैकस्वरूपः स्वाभाविकानवधिकातिशयज्ञानबलैश्वर्यवीर्यशक्तितेजः प्रभृत्यसंख्येयकल्याणगुणगणमहोदधिः, स्वाभिमतानुरूपैकरूपाचिन्त्यदिव्याद्भुतनित्यनिरवद्यनिरतिशयौज्ज्वल्यसौगन्ध्यसौन्दर्यसौकुमार्यलावण्ययौवनाद्यनन्तगुणनिधिदिव्यरूपः, स्वोचितविविधविचित्रानन्ताश्चर्यनित्यनिरवद्यापरिमितदिव्यभूषणः। ...........

*****

## परिशिष्टं - ११

# न्यायामृतोक्तब्रह्मनिर्गुणत्वनिरासकानुमानानि

१. ब्रह्म धर्मिसत्तासमानसत्ताकधर्मवद् उक्तसत्ताकभावरूपधर्मवद्वा, यावत्स्वस्वरूपमनुवर्तमानधर्मवद्वा, यावत्स्वस्वरूपमनुवर्तमानधर्मवद्वा, उक्तविशेषणवद्भावरूपधर्मवद्वा, स्वज्ञानाबाध्यभावरूपधर्मवद्वा, धर्मैर्भावरूपैर्धर्मैर्वा हीनं नावतिष्ठते पदार्थत्वात्, भावत्वाद्वा, अभावविलक्षणत्वाद्वा, घटवत् ।।

२. ब्रह्म स्वज्ञानाबाध्यप्रकारवत्, स्वारोपितव्यावर्तक स्वज्ञानाबाध्यप्रकारवद्वा अधिष्ठानत्वात् शुक्तिवत्।

३. ब्रह्म स्वज्ञानाबाध्यदुःखव्यावृत्तिमत्, स्वज्ञानबाध्यदुःखव्यावर्तकधर्मवद्वा, दुःखानात्मकत्वात् घटवत्।

४. ब्रह्म स्वज्ञानाबाध्यप्रकारकज्ञानविशेष्यम्, सन्दिग्धत्वात्, विचार्यत्वात्, निर्णेतव्यत्वाच्च स्थाणुवत्।

५. ब्रह्म वेदान्ततात्पर्यगोचरप्रकारवत्, वेदान्तविचारविषयत्वात्, यदेवं तदेवं यथा कर्मकाण्डविचारविषयो धर्मः।

६. ईश्वरः सदावाप्तसमस्तकल्याणगुणः सदा तत्प्रेप्सुत्वे सति तत्र शक्तत्वात्, यो यदा यत्प्रेप्सुत्वे सति यत्र शक्तः, स तदा तद्वान्, यथा चैत्रः।

७. ईश्वरः सदा त्यक्तसमस्तदोषः सदा तज्जिहासुत्वे सति तत्त्यागे शक्तत्वात्, यो यदा यज्जिहासुत्वे सति यत्त्यागे शक्तः स तदा त्यक्ततद्दोषः यथा चैत्रः। तत्प्रप्सादिकं च प्रेक्षावत्वादिना विपक्षे अधिष्ठानन्वसन्दिग्धत्वादिकं न स्यात्॥ इति॥

---

न्या.भा. ३ पृ. १४९-१५०

*****

## परिशिष्टं - १२

# अनन्तश्रुत्यर्थे मतत्रयभाष्यम्

### [1]शाङ्करभाष्यं

सत्यं ज्ञानमनन्तं ब्रह्मेति ब्रह्मणो लक्षणार्थं वाक्यम्। ब्रह्म विवक्षितत्वाद्वेद्यतया। वेद्यत्वेन यतो ब्रह्म प्राधान्येन विवक्षितं, तस्माद्विशेष्यं विज्ञेयम्। अतः अस्मात् विशेषणविशेष्यत्वादेव सत्यादीन्येकविभक्त्यन्तानि पदानि समानाधिकरणानि। सत्यादिभिस्त्रिभिर्विशेषणैर्विशेष्यमाणं ब्रह्म विशेष्यान्तरेभ्यो निर्धार्यते।

सत्यादिशब्दा न परस्परं सम्बध्यन्ते, परार्थत्वात् विशेष्यार्था हि ते। अत एकैको विशेषणशब्दः परस्परं निरपेक्षो ब्रह्मशब्देन सम्बध्यते-सत्यं ब्रह्म ज्ञानं ब्रह्म अनन्तं ब्रह्मेति।

ज्ञानं ज्ञप्तिरववोधो-भावसाधनो ज्ञानशब्दोन तु ज्ञानकर्तृ, ब्रह्मविशेषणत्वत्सत्यानन्ताभ्यां सह। न हि सत्यतानन्तता च ज्ञानकर्तृत्वे सत्युपपद्येते। ज्ञानकर्तृत्वेन हि विक्रियमाणं कथं सत्यं भवेदनन्तं च? यद्धि न कुतश्चित्प्रविभज्यते तदनन्तम्। ज्ञानकर्तृत्वे च ज्ञेयज्ञानाभ्यां प्रविभक्तमित्यनन्तता न स्यात्। 'यत्र नान्यद्विजानाति स भूमा अथ यत्रान्यद्विजानाति तदल्पम् इति श्रुत्यनन्तरात्। नान्यद्विजानातीति विशेषप्रतिषेधात्मानं विजानातीति चेन्न। भूमलक्षणविधिपरत्वाद्वाक्यस्य। 'यत्र नान्यत्पश्यति' इत्यादि भूम्नो लक्षणविधिपरं वाक्यम्। यथा प्रसिद्धमेवान्योऽन्यत्पश्यतीत्येतदुपादाय यत्र तन्नास्ति स भूमेति भूमस्वरूपं तत्र ज्ञाप्यते। अन्यग्रहणस्य प्राप्तप्रतिषेधार्थत्वान्न स्वात्मनि क्रियास्तित्वपरं वाक्यम्। स्वात्मनि च भेदाभावाद्विज्ञानानुपपत्तिः। आत्मनश्च विज्ञेयत्वे ज्ञात्रभावप्रसङ्गः। ज्ञेयत्वेनैव विनियुक्तत्वात्।

---

१. तै.उ.शां.भा.पृ. २८०-२८७

तत्रानन्तशब्दो अन्तवत्त्वप्रतिषेधद्वारेण विशेषणम्। सत्यज्ञानशब्दौ तु स्वार्थसमर्पणेणैव विशेषणे भवतः।

विज्ञातृस्वरूपाव्यतिरेकात्करणादिनिमित्तानपेक्षत्वाच्च ब्रह्मणो ज्ञानस्वरूप-त्वेऽपि नित्यत्वप्रसिद्धिः। अतो नैव धात्वर्थस्तदक्रियारूपत्वात्। अत एव च न ज्ञानकर्तृ, तस्मादेव च न ज्ञानशब्दवाच्यमपि तद्ब्रह्म। तथापि तदाभासवाचकेन बुद्धिधर्मविषयेण। ज्ञानशब्देन तल्लक्ष्यते, न तूच्यते, शब्दप्रवृत्तिहेतुजात्यादि-धर्मरहितत्वात्।

एवं सत्यादिशब्दा इतरेतरसन्निधानादन्योन्यनियम्यनियामकाः सन्तः सत्यादिशब्दवाच्यात्तन्निवर्तका ब्रह्मणो, लक्षणार्थाश्च भवन्तीति। अतः सिद्धं 'यतो वाचो निवर्तन्ते। अप्राप्य मनसा सह' 'अनिरुक्तेऽनिलयने' इति चावाच्यत्वं, नीलोत्पलवदवाक्यार्थत्वं च ब्रह्मणः।

तत्र त्रिविधं ह्यानन्त्यं देशतः कालतो वस्तुतश्चेति। तद्यथा देशतोऽनन्त आकाशो, न हि देशतस्तस्य परिच्छेदोऽस्ति। न तु कालतश्चानन्त्यं वस्तुतश्चाकाशस्य। कस्मात् कार्यत्वात्। नैवं ब्रह्मण आकाशवत्काल-तोऽप्यन्तवत्त्वमकार्यत्वात्। कार्यं हि वस्तु कालेन परिच्छिद्यते। अकार्यं च ब्रह्म। तस्मात्कालतोऽप्यनन्तम्। तथा वस्तुतः। कथं पुनर्वस्तुत आनन्त्यं सर्वानन्यत्वात्। भिन्नं हि वस्तु वस्त्वन्तरस्यान्तो भवति। वस्त्वन्तरबुद्धिर्हि प्रसक्ताद्वस्त्वन्तरान्निवर्तते। यतो यस्य बुद्धेर्निवृत्तिः स तस्यान्तः। तद्यथा गोत्वबुद्धिरश्वत्वाद्विनिवर्तत इत्यश्वत्वान्तं गोत्वमित्यन्तवदेव भवति। भिन्नेषु वस्तुषु दृष्टो, नैवं ब्रह्मणो भेदः। अतो वस्तुतोऽप्यानन्त्यम्। कथं पुनः सर्वानन्यत्वं ब्रह्मण इत्युच्यते, सर्ववस्तुकारणत्वात् । सर्वेषां हि वस्तूनां कालाकाशादीनां कारणं ब्रह्म। कार्यपेक्षयावस्तुतोऽन्तवत्त्वमिति चेन्न। अनृतत्वात्कार्यवस्तुनः। न हि कारण व्यतिरेकेण कार्यं नाम वस्तुतोऽस्ति। यतः कारणबुद्धिर्विनिवर्तेत। 'वाचारंभणं विकारो नामधेयं मृत्तिकेत्येव सत्यं' एवं सदेव ाsत्यमिति

श्रुत्यन्तरात्। तस्मादाकाशादिकारणत्वाद्देशतस्तावदनन्तं ब्रह्म। आकाशो ह्यनन्त इति प्रसिद्धं देशतः, तस्य चेदं कारणं, तस्मात्सिद्धं देशत आत्मन आनन्त्यम्। न ह्यसर्वगतात्सर्वगतमुत्पद्यमनं लोके किञ्चिद् दृश्यते। अतो निरतिशयमात्मन आनन्त्यं देशतः, तथाऽकार्यत्वात्कालतः, तद्भिन्नवस्त्वन्तरा-भावाच्च वस्तुतः। अत एव निरतिशयसत्यत्वम्।

## [२]रामानुजमतरीत्या भाण्यं

देशकालवस्तुपरिच्छेदरहितं ब्रह्म। **''सत्यं ज्ञानमनन्तं ब्रह्म''** इत्यत्र स्वरूपमाह - सगुणत्वात् स्वरूपस्य स्वरूपेण गुणैश्चानन्त्यं। तेन पूर्वपदव्यावृत्तकोटिद्वयविलक्षणाः सातिशयस्वरूपस्वगुणाः नित्या व्यावृत्ताः। विशेषणानां व्यावर्तकत्वात् (श्री.भा. १. भा. २.११६)

देशकालवस्तुपरिच्छिन्नरहितं ब्रह्म। **''इहेदं नान्यत्र''** इति परिच्छेत्तुं अशक्यं देशापरिच्छेदः। **''इदमिदानीं नान्यदेति''** परिच्छेदायोग्यत्वं कालपरि-च्छेदः। ''इदं इदं नेति'' परिच्छेदानर्हत्वलक्षणं सर्ववस्तुसामान्याधि-करण्यार्हत्वं वस्त्वपरिच्छेदः। यद्वा वस्तुस्वभावतः परिच्छेदो वस्तुपरिच्छेदः। तथा तुल्य-कालत्वेऽपि तुल्यपरिमाणत्वेऽपि दशवर्णसुवर्णपिक्षया कलधौतादेः अपकर्षः तद्राहित्यं वस्त्वपरिच्छेदः। समाभ्यधिकराहित्यनिदानभूतो गुणैर्निरतिशयप्रकर्षो वस्त्वपरिच्छेदः इत्युक्तं भवतीति व्यासार्यैः व्याख्यातम्। (तै.उ.रं.भा. २०, २१)

अनन्तशब्दस्य योगारूढत्वं पुल्लिङ्गतायौगिकत्वे तु नपुंसकलिङ्गतेति भावः।

## [३]मध्वभाष्यम्

**''स्वयोग्यं ब्रह्मविद्भुङ्क्ते विरिञ्चेण परेण च।**
**ब्रह्मणा सह तद्वश्यः सुखमेव न दुष्टकृतम्।।''**

इति च तैत्तिरीय भाष्यम्। राधवेन्द्रतीर्थखण्डार्थः।

---

२. वि.को.अ. १. पृ. १७५

३. तै.उ.ष.पृ. १६१-१६२, १६८

''सत्यं ज्ञानं अनन्तं ब्रह्मेति ....। प्रत्येकं लक्षणत्वात् त्रीणि लक्षणान्यवश्यं ज्ञातव्यत्वादुक्तानि। .....ज्ञानत्वं तु स्वपरगताशेषसामान्यविशेषविषयकज्ञान-रूपत्वम्। अनन्तत्वं च देशकालगुणापरिच्छिन्नत्वम्।''

## वादिराजतीर्थविरचितप्रकाशिकाह्न

''ज्ञानपदेन कर्तर्यपि ल्युटोऽनुशासनात् विशेषोक्तेः सङ्कोचे कारणाभावात् निरवधिकसर्वज्ञातृत्वरूपं सृष्ट्याद्युपयोगितया सूत्रकृत एवाभिप्रेतं.....। अनन्तपदेन च सृष्ट्युपयुक्ततया ''कोह्येवान्यात् कः प्राप्यात्'' इति श्रुत्युक्तं ''आनन्दमयोऽभ्यासात्'' इति सूत्रोक्तं च आनन्देनान्तररहितत्वाख्यमानन्दपूर्णत्वं च पञ्चमं लक्षणमुदितम्।''

*****

## परिशिष्टं - १३

# भगवद्गीतान्तर्गतानन्तशब्दव्याख्यारूपाणि मतत्रयभाष्यवचनानि

### (१) अनन्तश्चास्मि नागानां अ. १०-२९

**शां.भा.** अनन्तश्चास्मि नागानां नागविशेषाणां नागराजश्चास्मि । पुट ४५८

**रा.भा.** नागाः बहुशिरसः । पुट ३४६

**मा.व्या.** नागानामनेकशिरसां देशकाल गुणानन्त्यहेतुनाऽनन्तनामा शेषगतः । (गीताविवृतिः)

**(२) सर्वाश्चर्यमयं देवमनन्तं । अ. ११-११**

**शां.भा.** अनन्तं नास्यान्तोऽस्तीति अनन्तस्तम् । पुट ४७२

**रा.भा.** अनन्तं कालत्रयवर्तिनिखिलजगदाश्रयतया देशकालपरिच्छेदानर्हम् । पुट ३६०

**मा.व्या.** अनन्तं देशकालगुणापरिच्छिन्नं (गी.वि.)

**(३) पश्यामि त्वां सर्वतोऽनन्तरूपम् । अ ११-१६**

**अनेकबाहूदरवक्त्रनेत्रं पश्यामि त्वा सर्वतोऽनन्तरूपम् ।**
**नान्तं न मध्यं न पुनस्तवादिं पश्यामि विश्वेश्वर विश्वरूप ॥**

**११-१६**

**शां.भा.** अनन्तरूपं अनन्तानि रूपाणि अस्येत्यनन्तरूपः तं। पुट ४७४

**रा.भा.** **ह्ह**

**मा.व्या.** अनन्तानि अस्य रूपाणि इति अनन्तरूपः । (भा.) पुट ६२०

अनेकशब्दोऽनन्तवाची।

विश्वशब्दश्च अनन्तवाची ।

''सर्वं समस्तं विश्वमनन्तं पूर्णमेव'' च । इति अभिधानात्

- इत्यादि -

अन्यत्र तु - अपरिमाण इति ।

''परात्परं यन्महतो महान्तं यदेकमव्यक्तमनन्तरूपम् ।

-इति यजुर्वेदे

अव्यक्तस्य अनन्तत्वादेव महत्वे अपरिमितत्वं सिध्यति ।

''महान्तं च समावृत्य प्रधानं समवस्थितम् । अनन्तस्य न तस्यान्तः संख्यानं चापि - विद्यते'' - इत्यादित्य पुराणे ॥

तानि च एकैकानि रूपाणि अनन्तानि इति चैकत्र भवति। असंख्याताः ज्ञानकाः तस्य देहाः ।

''सर्वे परीमाणविवर्जिताश्च'' **इति ऋग्वेदखिलेषु ॥**

**(४) अनादिमध्यान्तमनन्तवीर्यं अनन्तबाहुं शशिसूर्यनेत्रम् ।** ११-१९

**शां.भा.** अनादिमध्यान्तं आदिश्चमध्यं चान्तश्च न विद्यते यस्य सो अनादिमध्यान्तस्तं... ।

अनन्तवीर्यं न तव वीर्यस्यान्तो अस्तीत्यनन्तवीर्यस्तं त्वामनन्तवीर्यं तथानन्तबाहुमनन्ता बाह्वः यस्य तव ।

**रा.भा.** अनादिमध्यान्तं आदिमध्यान्तरहितं अनन्तवीर्यं अनवधिकातिशयवीर्यम्, वीर्यशब्दः प्रदर्शनार्थः। अनवधिकातिशयज्ञानबलैश्वर्यशक्तितेजसां निधिमित्यर्थः ।

अनन्तबाहुं असंख्येयबाहुं, सोऽपि प्रदर्शनार्थः । ......

**मा.व्या.** अनादिमध्यान्तं आदिमध्यान्तशून्यं गुणतोऽत्रादिमध्यान्तहीनत्वमुच्यते । ''नान्तं न मध्यं'' इत्यत्र देशतः। गी.वि.

अनादिमध्यान्तं इति गुणानन्त्यापेक्षया । ११-१९

त्वया ततं विश्वमनन्तरूपं इति कालापेक्षया । गी.ता. ११-३८

**(५) मया प्रसन्नेन..... तेजोमयं विश्वमनन्तमाद्यं ११-४७**

**शां.भा.** अनन्तं अंतरहितं

**रा.भा.** अनन्तं अन्तरहितं प्रदर्शनार्थं इदं आदिमध्यान्तरहितम् ।

**मा.व्या.** अनन्तं देशकालापरिच्छिन्नं

**(६) मानुष्याणां सहस्रेषु कश्चित् यतति सिद्दये । .... ७-३**

**शां.भा.** मनुष्याणां मध्ये सहस्रेषु अनेकेषु कश्चित् यतति प्रयत्नं करोति सिद्धये सिध्यर्थं । पुट ३४३-४

**रा.भा.** मनुष्याः शास्त्राधिकारयोग्याः तेषां सहस्रेषु कश्चिदेव सिद्धिपर्यन्तं यतते । यतमानानां सहस्रेषु.... ।

**मा.व्या.** अनन्तानां तु जीवानां यतन्ते केचिदेव तु ।

*****

## परिशिष्टं - १४

## विष्णुसहस्रनामगतानन्तादिशब्दविषयकानि मतत्रयभाष्यवचनानि

**वि.स.** **सहस्रजिदनन्तजित् (४६)**

**शां.भा.** सर्वंभूतानि युद्धक्रीडादिषु सर्वत्राचिन्त्यशक्तितया जयतीति । अनन्तजित् । पुट २८६.

**रा.भा.** परिमितशिशुरूपस्याप्यस्य कश्चित् कदाचित् कथंचिदपि महिमावधि प्रकर्षो नास्तीति । (वि.स.भा.) अन्तं परिमितशिशुरूपस्य महिमावधिं जयति अभिभवति प्रधर्षयतीति । (वि.स.नि.) पुट १७५

**मा.व्या.** अनन्तान् जयतीति अनन्तजित् । ६.४

अनन्तानि वस्तूनि जयतीति अनन्तजित् (स) ३७-३८

अनन्तश्च जिच्च । अनमपि तनोति जयति च । ब. ५८ पुट

**वि.स.** **अम्भोनिधिरनन्तात्मा (६८)**

**शां.भा.** देशतः कालतो वस्तुतश्च अपरिच्छिन्नत्वात् अनन्तात्मा पुट ३७६

**रा.भा.** तदुपरि जगदाधारस्तम्भभोगीन्द्रस्य आत्मतया तिष्ठतीति। वि.स.भा.

तदुपरितनजगदाधारस्तम्भभूतभोगीन्द्रात्मतया, अनन्तस्य नास्तितमगुणान्तस्य आधारतया सर्वप्राणानस्य वा शेषस्यात्मा अन्तरात्मा इति। वि.स.नि.

**मा.व्या.** देशतः कालतो गुणतश्चापरिच्छिन्नस्वरूपत्वात् अनन्तात्मा।

वि.८७

(स) पुट ७१

(१) अनन्ता अपरिमिता आत्मानो देहा यस्येति वा।

(२) अन्तः अति बन्धने। न विद्यतेऽन्तो बन्धो यस्य सोऽनन्तः। अबद्धश्चासौ आत्मा चेति वा।

(३) अनन्तानां अनन्तसंख्याकानां अबद्धानां वा मुक्तानां आत्मा स्वामीति वा अनन्तात्मा।

(४) अनन्ते शेषे आत्मा देहो यस्येति वा।

**वि.स.** **वीरोऽनन्तो धनन्जयः (८३)**

**शां.भा.** व्याप्तित्वात् नित्यत्वात् सर्वात्मकत्वात् देशतः कालतः वस्तुतश्चापरिच्छिन्नः अनन्तः। ''सत्यं ज्ञानमनन्तं ब्रह्म'' इति श्रुतेः (तै.उ. २-१)।

गंधर्वाप्सरसः सिद्धाः किन्नरोरगचारणाः। नान्तं गुणानां गच्छन्ति तेनानन्तोऽयमव्ययः।। वि.पु. २-५-३४ पुट ४४५

**रा.भा.** नास्य देशकालवस्तुतो अवधयः सन्तीति, सदा सर्वत्र सर्वथा च प्रवृत्तस्वभाव इत्यर्थः ।

नारायणः । सत्यं ज्ञानमनन्तं ब्रह्म । (तै.उ.आ.) । अयं योगारूढः । अतः नारायणादि शब्दपर्यायः त्रिविधानन्त्ययोगिनि भगवति मुख्यो वर्तते ।

अनन्तशब्दश्च ''नान्तं गुणानां गच्छन्ति तेनानन्तोऽयमुच्यते'' इति निर्वचनात् गुणपरिपूर्णत्वं दर्शयति।....

अवधिरहितः नाशरहितश्च न विद्यते अन्तः यस्य, अन्तः - अवधिः नाश्च । पुट १७४

**मा.व्या.** ''यत्तन्नोपलभ्यते तिर्यगूर्ध्वमधस्तात् तस्मादुच्यते अनन्त'' इति श्रुतेरनन्तः । वि. ९९-१००

अनन्तो न विद्यतेऽन्तो नाशो यस्य सः । (स) पुट ७९

**वि.स.** **अनन्तो हुतभुग्भोक्ता (१०८)**

**शां.भा.** नित्यत्वात् सर्वगतत्वात् देशकालवस्तु परिच्छेदाभावात् अनन्तः शेषरूपो वा । पुट ५५०

**रा.भा.** ह्न्ह

**मा.व्या.** देशकालगुणपरिच्छेदाभावादनन्तः ।

(अनं प्राणं तनोतीति वा । अशब्देन ब्रह्मणा नतो वा । न नतो वा । वि. पुट १२१

न विद्यतेऽन्तो बन्धो यस्य सोऽनन्तः ।

(२) अति बन्धने । न विद्यते अन्तो नाशो यस्येति वा । स. पुट १०२-१०३

**वि.स.** **अनन्तरूपो (११३)**

**शां.भा.** अनन्तानि अनेकानि रूपाण्यस्य विश्वप्रपञ्चरूपेण स्थितस्येति अनन्तरूपः ।

**रा.भा.** ईदृशिं सद्यः सम्पाद्यानि रूपाण्यस्य इति । (वि.स.भा.)

सद्यः सम्पाद्यानि च अनन्तानि बहूनि रूपाण्यस्येति । (वि.स.नि.) पुट १७७

**मा.व्या.** अनन्तरूपाणि अस्येत्यनन्तरूपः । वि. १२५

अनन्तानि अपरिमितानि अनाशानि वा रूपाणि यस्य सोऽनन्तरूपः । पुट १०७-१०८ स

**वि.स.** **अनन्तश्रीः**

**शां.भा.** अनन्ता अपरिमिता श्रीः पराशक्तिः अस्येति अनन्तश्रीः । ''परास्य शक्तिः विविधैव श्रूयते'' (श्वे. ६-८)

**रा.भा.** स्वप्राप्तिपर्यन्ताः अनन्ताः बह्व्यः श्रियः सम्पदोऽपि अस्येति । (वि.स.नि.) पुट १७८

प्रपन्नेभ्यः देयाः स्वप्राप्तिपर्यन्ताः अनन्ताः श्रियोऽप्यस्येति । (वि.स.भा.)

ततो गजेन्द्रमस्मात् कलेवराद्धि प्रमोक्ष्य दिव्यं च वपुः प्रापय्य तस्य स्वसायुज्यप्रदानात् तेभ्यो देयाः ऐहिकाद्याः पुट १७८

**मा.व्या.** अपरिमिता श्रीः परा शक्तिरस्येति अनन्तश्रीः। । वि. पुट १२५

अनन्तश्रीरनन्ता नाशरहिता श्रीः स्वरूपश्रीर्यस्य स तथा। ''स्वस्यश्रीस्तथा भार्या द्वेधा श्रीस्तु हरेर्मतेति'' भागवत तृतीयतात्पर्योक्तेः। । पुट १०७-१०८

# परिशिष्टं - १५

## अनन्तशब्दस्य आनन्दाभिधायकत्वे ऐतिह्यम्

**Extract from “Origin of Sree Padmanabha Swamy Temple”**

Anantankatu of forest of Ananta, the snake chief and close attendant of Sree Padmanabha Swamy seems to be one of the earliest labels of identification bestowed on this area in folk-lore. Some scholar point out that since the Temple has undoubted earlier existence, the other names of this city would possess greater age. It is well known that ‘bliss’ is synonymous with ‘Brahman’ as is emphasised by the declaration Aanando Vai Brahma. The terms Syanadoora Puri or Syanadoorapuram – the city of Maha Vishnu (whose one name is Aananda or bliss which is Brahmam) or “the City of Bliss” itself, have appeared in the works of early origin and have re-surfaced much later on also as Syanandoorapuram – the city where bliss or Brahmam is within reach as sung by the sages. This is supported by the Tulu Brahmin author of Syanandoora Purana Samuchayam (4269 Kali Year). He states that the place came to be known as Syanandoora as the ancient sages considered Aananda or transcendental bliss not far off from this city. It also bore the name Aanandapuram (meaning same as above) which in course of time got abbreviated to Anandapuram and this later on became Anantapuram or Anantasayana Nagari both meaning the city of Ananta or the city of the one who reclines on Ananta – Padmanabha. The prefix ‘Thiru’ got added on at a later stage.

---

ORIGIN HISTORY OF SRI PADMANABHA TEMPLE By V.S. Sharma, Published by Athira Publications, Tiruvanantapuram (2007) Phage 33.

Here the Originally Anandapuram was the name of the place latteron it was known as Anantapura.

# परिशिष्टं - १६

## ಹರಿದಾಸಸಾಹಿತ್ಯದಲ್ಲಿ ''ಅನಂತ''

**1. ಶ್ರೀಪಾದರಾಜರ ಕೃತಿಗಳು** ರಾಗ ನಾಟಿ – ಸುಳಾದಿ – ಧೃವತಾಳ

ಅನ್ನಂತಕಾಲದಲ್ಲಿ ನಿನ್ನ ನಾನರಿಯದೆ ಬಂದೆನೊ
ಅನ್ನಂತಕಾಲದಲ್ಲಿ ನಿನ್ನವನೆನಿಸದೆ ಮೂರುಖನಾದೆನೊ
ಅನ್ನಂತ ಕಾಲದಲ್ಲಿ ನಿನ್ನ ಚರಣರತಿಯಿಲ್ಲದೆ ನೊಂದೆನೊ
ಅನ್ನಂತಕಾದಲ್ಲಿ ಅದಾವ ಪುಣ್ಯದಿಂದ ಬಂದು ಇಂದು
ನಿನ್ನವನೆನಿಸಿದೆ ಅದಾವ ಪುಣ್ಯದಿಂದಲೆನ್ನ ಮನ
ನಿನ್ನಲ್ಲೆರಗಿತೊ ನೋಯದಂತೆ
ಎನ್ನ ಪೊರೆದು ಪಾಲಿಸೋ ದೀನನಾಥ ಶ್ರೀರಂಗವಿಠಲ ॥

**(2) ಶ್ರೀವ್ಯಾಸರಾಜರ ಕೃತಿ** ರಾಗ ಸಾಳಂಗ ನಾಟಿ – ಧ್ರುವತಾಳ

ಎನ್ನ ಮಹಾದೋಷಂಗಳು ಅನ್ನಂತವಾದಡೆ ಅಂಜೆ ನಾನು
ನಿನ್ನ ಕಲ್ಯಾಣ ಗುಣಗಣ ಅನಂತಾನಂತವಾಗೆ
ಎನ್ನ ಅನಾದಿ ತಪ್ಪುಗಳು ಅನಂತವಾದಡೆ ಅಂಜೆ ನಾನು
ನಿನ್ನ ಕರುಣೆ ಅಪಾರ ಅನಂತಾನಂತ ವಾಗೆ ಹರಿ ಹರಿ ಬಾ
ಎನ್ನ ಜನುಮ ಜನುಮಕೆ ಸಿರಿ ಕೃಷ್ಣ

**(3) ಪುರಂದರದಾಸರ ಕೃತಿ** ಸುಳಾದಿ : ಮಠ್ಯತಾಳ

ಸಂಚಿತಕರ್ಮಗಳನಂತಕೋಟಿಗಳು
ಪ್ರಾರಬ್ಧಕರ್ಮಗಳು ಕೋಟಿ ಕೋಟಿಗಳು
ಆಗಾಮಿ ಕರ್ಮಗಳು ಕೋಟಿ ಕೋಟಿಗಳು
ಪುರಂದರ ವಿಠಲನ ಕಂಡಲ್ಲದೆಲ್ಲಿಯ ಮುಕುತಿ
ಸಂಚಿತಕರ್ಮಗಳನಂತ ಕೋಟಿಗಳು

---

इमाः कृतयः कर्नाटक सर्वकारेण स्वस्य समग्र दाससाहित्य सम्पुटेषु प्रकाशिताः।

परिमाणलक्षणगणविषये कोटिगुणत्वोक्तेरपवादस्य प्रमितत्वाच्च मुक्त्यनन्तरं ब्रह्मणो ज्ञानाभिवृद्धेरभावाद्रमायाः प्रतिक्षणमपि यावत्कालं ज्ञानाभिवृद्धिरस्तीति वक्ष्यमाणत्वाच्च, जीवत्वदुःखस्पृष्टत्वाणु चेतनत्वादिना समानेभ्यः सुपर्णादिभ्योऽपि विरिञ्चादावनन्तगुणाधिकत्वस्य प्रमितत्वेन, अनादितोऽपि दुःखास्पृष्टत्वव्याप्तत्वनित्यमुक्तत्वाद्यति वैलक्षण्योपेततया भगवत्समाया भगवदनन्तरूपेषु नित्यावियोगिन्याः परमोच्चनिजस्वभावानन्तगुणगणपरिपूर्णत्वेन महच्च माहात्म्यं तस्या वेदेषूच्यत इति गीजाभाष्यादौ प्रमिताया, वेदानुक्तमाहात्म्योपेतत्वेन महद् ब्रह्मानिरुक्तादिशब्दप्रतिपाद्यायाः सर्वकाल-गताशेषप्रपञ्चस्यापि मन्दकटाक्षमात्रात् सर्गस्थितिप्रलयसंसृतिमोक्षहेतोर्महा-लक्ष्म्याः किमु ततोऽप्यनन्तगुणाधिकत्वमिति कैमुत्यन्यायसिद्धत्वाच्चावश्य-मङ्गीकर्तव्यं विजातीयानन्तगुणाधिकत्वं सजातीयज्ञानानन्दाधिक्यं चेति। तदेतदाह॥ सर्वदेवेति॥ तच्चोक्तमचिन्त्या श्रीरिति द्वादशस्तोत्रे ॥ १८४॥

यज्ज्ञानाव्याकृताकाशे विश्वं भाति पराणुवत्।<br>
क्षणस्यानन्तभागानामेकांशस्यांशकेन च ॥ १८५॥

विष्णोर्गुणानन्तांश्च द्रष्टुं शक्तापि सा स्फुटम्।<br>
क्षणे क्षणे नवनवसुविशेषोपलंभतः ॥ १८६॥

तत्तत्काले गाहमाना कौतूहलमहार्णवे।<br>
परमानन्दसन्दोहसान्द्रा ध्यायाति सा पुनः ॥ १८७॥

सृष्टिः स्थितिश्च संहारो नियतिर्ज्ञानिमावृत्तिः।<br>
बंधमोक्षदयः सर्वे महाभूतिपुरस्सराः ॥ १९१॥

अनाद्यनन्तकालेषु सर्वस्य जगतोऽपि च।<br>
कटाक्षलेशमात्रेण महालक्ष्म्या भवन्ति हि ॥ १९२॥

अनन्तानन्तरूपा च ज्ञानानन्दादिरूपिणी।
समा च सर्वरूपेषु विशिष्टा दक्षिणासुखे ॥ २१०॥

अनन्तानन्तरूपैश्च नानाकारगतैः शुभैः।
पूजयन्ती जगन्नाथं सर्वदा परमादरात् ॥ २११॥

हरिपूजात्मकाशेषमहाश्चर्याखिलक्रिया।
अनन्तानन्तकल्याणगुणसान्द्रमहाकृतिः ॥ २१३॥

वेदानुक्तमहानन्तगुणपूर्णा सदा रमा।
को नाम वक्तुं शक्तोऽस्या माहात्म्यममरोऽपि वा ॥ २१७॥

किमन्ये मानुषा मन्दाः कुतोऽल्पप्रतिभायुताः।
तथापि सङ्ग्रहेणैव यथाशक्ति निरूपितम् ॥ २१८॥

# मुक्तितत्त्वम्

सज्ज्ञानानन्दाग्निसूर्यानन्तकोटितनुप्रभः ।
सज्ज्ञानानन्दसम्पूर्णगुणानन्तावतारकः || १९० ||

सज्ज्ञानानन्दरक्तिश्च सज्ज्ञानानन्दभाग्यकः।
सज्ज्ञानानन्दैवमादिसुगुणो भाति श्रीपतिः || १९७ ||

इति ध्यात्वापि मनसा पुनरेवं विचिन्तयेत्।
अनन्तानन्तपादाब्ज ध्वजवज्राङ्कुशाब्जकः || ११८ ||

अनन्तानन्ताङ्घ्रिपार्श्वो ह्यनन्तानन्तपन्नखः।
अनन्तानन्ताङ्गुलिश्चाप्यनन्तानन्तपादवान् || १९९ ||

अनन्तानन्तसक्षुद्रघण्टानूपुरगुल्फकः।
अनन्तानन्तसद्राजज्जङ्घोऽसौ जगदीश्वरः || २०० ||

अनन्तानन्तसज्जानुरनन्तोरुयुगः प्रभुः ।
अनन्तानन्तगुह्योऽसावनन्तानन्तसत्कटिः || २०१ ||

अनन्तानन्तजघनो ह्यनन्तानन्तचैलकः।
अनन्तानन्तमञ्जीरकटिसूत्रसुघण्टकः || २०२ ||

अनन्तानन्तसत्कुक्षिरनन्तानन्तपार्श्ववान्।
अनन्तानन्तपृष्ठादिभागवान्धरणीपतिः || २०३ ||

अनन्तानन्तेन्दिराङ्कवक्षोविस्तारवान् हरिः।
अनन्तानन्तश्रीमुक्तामालिकाकौस्तुभाकारः || २०४ ||

अनन्तानन्तयज्ञोपवीतयुग्मोत्तरीयकः।
अनन्तानन्तवसुमच्छ्रीकण्ठाभरणाश्रयः || २०५ ||

अनन्तानन्ततुलसीमल्लिकापद्मस्रग्धरः ।
अनन्तानन्तकर्पूरकुङ्कुमागरुगन्धवान् ॥ २०६ ॥

अनन्तानन्ताङ्गदयुगष्टबाहुधरो हरिः ।
अनन्तानन्तहस्तश्चाप्यनन्तवलयोऽप्ययम् ॥ २०७॥

अनन्तानन्ताङ्गुलिश्चाप्यनन्तोर्मिक एव हि।
अनन्तकरजोऽनन्तचक्राद्यष्टायुधो हरिः ॥ २०८॥

अनन्तानन्तकेयूरो ह्यनन्तानन्तसद्गलः ।
अनन्तरेखात्रयवानानन्तानन्तश्रीमुखः ॥ २०९॥

अनन्तानन्तचुबुकोऽप्यनन्तश्रीकपोलकः ।
अनन्तानन्तओष्ठोऽसावनन्तानन्तदन्तवान् ॥ २१०॥

अनन्तानन्तजिह्वोऽसावनन्तानन्ततालुकः ।
अनन्तानन्तवदनोऽप्यनन्तानन्तसुस्मितः ॥ २११॥

अनन्तानन्तसुश्मश्रुरनन्तानन्तघोणकः ।
अनन्तानन्तहनुमाननन्तानन्तदृष्टिमान् ॥ २१२ ॥

अनन्तापाङ्गयुक्तोऽसावनन्तानन्तभ्रूयुगः ।
अनन्तानन्तकर्णोऽसावनन्तानन्तकुण्डलः ॥ २१३॥

अनन्तानन्तकस्तूरीतिलकोऽनन्तकालकः ।
अनन्तानन्तशीर्षोऽसावनन्तश्रीशिरोरुहः ॥ २१४॥

अनन्तानन्ताभिरामकुन्तलोऽनन्तसच्छिखः ।
अनन्तानन्तहेमाढ्यलसच्छुद्धकिरीटवान् ॥ २१५॥

अनन्तानन्तमन्दारकेतकीकुन्दमस्तकः।
अनन्तानन्ताङ्गरोमा ह्यनन्तानन्तलक्षणः ॥ २१६॥

अनन्तानन्तसौन्दर्योऽप्यनन्तसमलङ्कृतिः।
अनन्तानन्तपादादिमकुटप्रान्तदेहवान् ॥ २१७॥

अनन्तानन्तनीलाब्भ्रतुलिताङ्गसुवर्णकः।
अनन्तानन्तसूर्याभोऽनन्तकोटितनुप्रभः ॥ २१८॥

अनन्तानन्तसम्पूर्णगुणानन्तावतारकः।
अनन्तानन्तदशकस्वरूपपवनो हरिः ॥ २१९॥

अनन्तानन्तसंव्याप्तस्वरूपदशकेन्द्रियः।
अनन्तानन्तबुद्धिश्चाप्यनन्तानन्तचित्तवान् ॥ २२०॥

अनन्तानन्तरसनोऽप्यनन्तस्पर्शवान्प्रभुः।
अनन्तानन्तवैहारो ह्यनन्तसुविलासकः ॥ २२१॥

अनन्तविभ्रमोऽनन्तगर्वोऽनन्तसुहास्यकः।
अनन्तानन्तधैर्योऽयमनन्तानन्तशौर्यकः ॥ २२२॥

अनन्तानन्तदानोऽयमनन्तानन्तशक्तिकः।
अनन्तानन्तरक्तिश्चाप्यनन्तानन्तभार्यकः ॥ २२३॥

अनन्तानन्तरूपोऽसौ कालदेशेषु सर्वदा।
अनन्तानन्तरूपोऽसावेकरूपो हरिस्स्वयम् ॥ २२४॥

एकरूपोऽपि भगवाननन्तानन्तरूपकः।
अनन्तस्वस्वरूपेषु भेदशून्यस्स्वभावतः ॥ २२५॥

जीवेभ्योऽत्यन्तभिन्नोऽयं जडेभ्योऽत्यन्तभेदवान्।
जीवेष्वन्योन्यभेदं जडेष्वपि तथैव च || २२६ ||

कृत्वा जीवगतस्तत्तत्कर्मणा वर्ष्म दास्यति।
तत्रापि सर्वव्यापारं कालतः कारयिष्यति || २२७ ||

एककालेऽप्येकरोम्णि सिद्धार्थ इव सर्वदा।
अनन्तानन्तब्रह्माण्डधारको धरणीधरः || २२९ ||

एकैकब्रह्माण्डमध्ये भुवनानि चतुर्दश।
एवं तत्रस्थजीवेषु रूपाण्यन्तर्बहिर्हरिः || २३० ||

अचिन्त्याद्भुतशक्तित्वाद्युज्येतास्यैवमेव हि।
इति चिन्तयन्तस्सन्तो जना यान्ति परां गतिम् || २३३ ||

कालतो देशतश्चापि नित्यानि हि न संशयः।
इति मत्वा रमादेव्या चिन्तितान्यपि सर्वदा || २३८ ||

एकौकावयवानन्त्यान्न हि बोध्या इति श्रुताः।
एवं मनस्सुनिश्चित्य ध्यायस्व पुरुषोत्तमम् || २३९ ||

अहो अद्भुतवैचित्र्यं व्यापारो रमया सह।
अनन्तावयवानन्दपूर्णो व्यापकरूपवान् || २५६ ||

## श्री बिदरहळ्ळि श्रीनिवासतीर्थतनुज श्रीवेङ्कटपत्याचार्यकृतया गुर्वर्थदीधित्या सङ्गृहीतः

# अकारादिवर्णानां विष्णुपरत्वेन व्याख्यानम्

१. जनिरहितत्वाद् अजः।

२. आनन्दरूपत्वाद् **आनन्दः।**

३. परमैश्वर्यवत्त्वाद् **इन्द्रः।** 'इदि परमैश्वर्ये' (धा.पा. ६३) इति धातुः।

४. 'ईकारेणोच्यते लक्ष्मीः' इति वचनादीं लक्ष्मीं शास्तीति **ईशः।**

५. उं रुद्रं ग्रसतीति **उग्रः।** दैत्यानां क्रूररूपत्वाद्वा।

६. 'ऊर्ज बलप्राणनयोः' इति (धा.पा. १५५०) धातोः **ऊर्जः** बलचेष्टावान्।

७. ऋतं सत्यं जगद् बिभर्तीति **ऋतम्भरः।** ऋतुम्भर इति पाठे तल्लक्षितं कालं बिभर्तीत्यर्थः। विभक्त्यलोपादलुक्समासोऽयम्।

८. 'ॠकारो दनुजप्रसूः' इति धनञ्जयात् ॠं दनुं घारयति 'घृ क्षरणदीप्त्योः' इति (धा.पा. १०९६) धातोर्दीपयत्यन्तः क्लेशयति पुत्रहननेनेति **ॠघः।**

९. 'ऌकारो देवमाता स्यात्' इति धनञ्जयाल्ऌरदितिः तस्याः शं सुखं यस्मात्स **ऌशः।**

१०. 'ॡकारः पूर्वदेवानां जननी स्मर्यते बुधैः' इति धनञ्जयात् ॡं दितिं पुत्रहननेन जयतीति **ॡजिः।** 'जेता जश्च समाख्यात' इति अभिधानात् ॡज इत्येव स्यात् तथापि 'तृतीयोऽतिशय' इति सूत्रादिकारः। ॡजरेकात्मेति पाठे तु लाति जयति ऋच्छति च सर्वमित्यर्थो द्रष्टव्यः।

११. **एकात्मा** मुख्यस्वामी।

१२. 'ऐकारः स्यान्महेश्वर' इति धनञ्जयादैकारवाच्यं रुद्रं रमयतीति **ऐरः।**

१३. ओजः सामर्थ्यं विभर्तीति **ओजोभृत्।**

१४. औ ब्रह्मा। 'औकार उच्यते ब्रह्म' इति धनञ्जयात्। स रसो वीर्यमपत्यं यस्य स **औरसः।**

१५. अन्तयति नाशयतीति **अन्तः।**

१६. आसमन्तादृद्धाः ब्रह्मादयो गर्भे यस्येति **अर्धगर्भः।**

१७. सुखरूप इति कः। पाल्यते जगदनेनेति पिः। लीयते जगदनेनेति लः। ततः कर्मधारयः। 'सुखादनन्तात् पालनाल्लीयनाच्च तं वै देवं कपिलमुदाहरन्ति' इति श्रुतेः (गीताभाष्ये अ.१० श्लो. २६ उदाहृतबाभ्रव्यशाखावचनम्)

१८. खानामिन्द्रियाणां पतिरिति **खपतिः।**

१९. गरुडवाहनत्वाद् **गरुडासनः।**

२०. शत्रुसन्तापनाद् **घर्मः स्यादातपे ग्रीष्मः इति विश्वः।**

२१. 'ङकारो विषयः स्मृत' इति धनञ्जयात् ङा विषयास्तेषु सारो वरो **ङसारः।**

२२. चारूणि सुन्दराण्यङ्गानि यस्य स **चार्वङ्गः।**

२३. छन्दोभिर्ज्ञायत इति **छन्दोगम्यः।**

२४. न जायत इति जनः, नञः परनिपातः, अर्दयति च संसारमिति **जनार्दनः।** 'स नासीत्सोऽर्दयति' इति श्रुतेः।

२५. झाटिता द्राविता अरयो येन स **झाटितारिः।**

२६. 'ञकारो गायके प्रोक्त' इति धनञ्जयात् ञं वेदादिना स्वगायकं मानयतीति **ञमः।**

२७. पाषाणदारणकारणमायुधं टङ्कः। तद्वान् **टङ्की।**

२८. 'ठो महेशः समाख्यातः। ल इन्द्रे लवणे लः स्यात्' इति धनञ्जयात् ठलयोः रुद्रेन्द्रयोः कं सुखं यस्मात्स **ठलकः।** ठकल इति पाठे ठकौ रुद्रब्रह्माणौ लातीति व्याख्येयम्। 'कं सुखं परिकीर्तितम्' इति धनञ्जयः।

२९. ‘बृहद्धनौ च डः प्रोक्तस्तथा चन्द्रस्य मण्डले। ‘रश्च रामेऽनले वज्रे।’ ‘कः प्रकाश उदाहृत’ इति धनञ्जयात् डं चन्द्रमण्डलं रोऽग्निस्तयोः कः प्रकाशो यस्मात्स **डरकः।**

३०. ढं निर्गुणं मुक्तसमुदायं रमयतीति ढरश्चतुर्मुखः। सोऽस्यास्ति परिचारकतयेति **ढरी।** ‘निर्गुणे ढः प्रकीर्तित’ इति धनञ्जयः।

३१. **णात्मा** सुखरूपः। ‘णश्च निर्वृतिवाचक’ इत्यभिधानात्।

३२. तारयत्यनिष्टनिचयमिति **तारः।**

३३. ‘शिलोच्चये थकारः स्यात्’ इति धनञ्जयात् थं शिलोत्तमं गोवर्धनं बिभर्तीति **थभः।**

३४. दण्डो यष्टिर्गोचारणादिक्रीडायामस्यास्तीति **दण्डी।**

३५. धनुष्मत्त्वात् धन्वी।

३६. सर्ववन्द्यत्वात् नम्यः।

३७. पिपर्तीति **परः** पूर्णः। ‘पॄ पालनपूरणयोः’ इतिधातोः (धा.पा. १०८६) पचाद्यच्। ‘परः स्वो हरिरुद्दाम इति नामचतुष्टयम्। विष्णोर्गुह्यं तु यो वेद सर्वपापैः प्रमुच्यत इति वचनात् विष्णुरेव परः।

३८. फलदातृत्वात् **फली।**

३९. बलवत्वात् **बली।**

४०. समग्रैश्वर्यादिरूपत्वाद् **भगः।**

४१. अवबोधरूपत्वात् **मनुः।** ‘मनु अवबोधन’ इति धातोः (धा.पा. १४७१)।

४२. इज्यते पूज्यते सर्वैरिति **यज्ञः।** ‘यज देवपूजे’ति धातोः (धा.पा. १००२)।

४३. रमत इति रः। न विद्यते मा परिच्छेदो यस्येत्यमः। रश्चासावमश्च **रामः।** रमयतीति वा ‘आनन्दरूपो निष्परीमाण एष लोकश्चैतस्माद्रमते तेन राम’ इति श्रुतेः।

४४. लक्ष्मीस्वामित्वात् **लक्ष्मीपतिः।**

४५. व्रियत इति **वरः।**

४६. शान्ता सुखरूपा संवित् यस्यासौ शान्तसंवित्।

४७. ऐश्वर्यादिषड्गुणयुक्तत्वात् **षड्गुणः।**

४८. सार उत्कृष्ट आत्मा देहो यस्य स **सारात्मा।** 'आत्मा देहे धृता'विति वचनात्।

४९. हन्ति जानाति च सर्वमिति हम्। 'हन हिसागत्योः' इति धातोः (धा.पा. १०१२)। सारत्वात्सः।

५०. 'ळकारश्चामृते स्मृत' इति धनञ्जयात् ळौ मुक्तौ आळू ब्रह्मेन्द्रौ तयोः कं सुखं यस्मात्स **ळाळुकः।** 'आकारस्तु पितामहे'। 'इन्द्रे विरोचने चैव ळुर्ळाह्वाने प्रकीर्तित' इति च।

इत्येताः मम **पञ्चाशन्मूर्तयः** अकारादयः प्रणवभेदाः **लक्षकाः** लक्षणवत्तया प्रतिपादकाः, मल्लक्षणप्रतिपादका इति यावत्, यासां तास्तथा अकारादिवाच्या देवता इत्यर्थः। वर्णाभिव्यक्तिकथनप्रकरणे संयुक्ताक्षरस्य पृथगभिव्यक्त्यभावात् क्षकारस्यात्रानुक्तिः। कषवर्णद्वयात्मकस्य क्षस्य पुरुषसिंहाकृतिर्देवतेति ज्ञेयम्। 'नृसिंहः क्षस्य देवता' इति वक्ष्यमाणत्वात् (तं.सा. २-३)॥ छ॥

एतेषामेव स्वरोष्मस्पर्शभेदेनाधिपतिदेवताभेदस्तु 'सर्वे स्वरा इन्द्रस्यात्मानः सर्वे ऊष्माणः प्रजापतेरात्मानः सर्वे स्पर्शा मृत्योरात्मानः' इति छन्दोगश्रुत्या।

'ऐश्वर्यादिन्द्रनामा तु वायुः स्वरपतिः स्मृतः।
ऊष्माधिपस्तु भगवान्विष्णुरेव प्रजापतिः॥
मृत्युनामाऽथ संहारद्रुद्रः स्पर्शाधिपः स्मृत' (छ.भा. २-२-१५) इति तद्भाष्याच्च

द्रष्टव्यः॥ ६-१०॥

## मातृका - मन्त्रार्थः

**(श्री वेदव्यासाचार्यकृततन्त्रसारटीकया समुद्धृतः)**

१. न जायते इति - अजः।

२. आनन्दः - सुखरूपी।

३. इन्द्र - परमैश्वर्यवान्।

४. ईशः - स्वामी।

५. उग्रः - क्रूरः नृसिंहो वा।

६. ऊर्जः - बलवान्।

७. ऋतुं - ऋतूपलक्षितं कालं बिभर्तीति - ऋतुम्बरः।

८. ॠं - दनुं घातयति दीपयति - पुत्रहननेति ॠघः।

९. लृशः - लृः अदितिः तस्याः शं श्रयो यस्मात् सहः लृशः।

१०. लॄः - दितिः तां जयतीति - लॄजिः पुत्रहननेन तां जयतीति भावः।

११. एकश्चासावात्मा च मुख्यस्वामी।

१२. ऐरः वायुमित्रम् यद्वा आयः रुद्रम् रमयति प्रळये इति ऐरः।

१३. ओजोभृत् - तेजस्वी।

१४. औरसः - उरसि भवः औ ब्रह्मा रसो वीर्यम् अपत्यं यस्य सः इति वा।

१५. अन्तयति नाशयति इति - अन्तः।

१६. आसमन्तात् ऋद्धाः ब्रह्मादयो गर्भे यस्येति - अर्द्धगर्भः।

१७. कपिलः - तन्नामा।

१८. खानाम् इन्द्रियाणाम् पतिः।

१९. गरुडासनः - गरुडवाहनः।

२०. घर्मः आतपः सन्तापकः।

२१. ङेषु विषयेषु सारः।

२२. चारूणि अङ्गानि यस्येति - चार्वङ्गः।

२३. छन्दोगम्यः - वेदप्रतिपाद्यः।

२४. दुष्टजनमर्दनत्वात् - जनार्दनः।

२५. झाडिताः विद्राविताः अरयो येन सः - झाडितारिः।

२६. ञमयेन गर्गरध्वनिनाऽपि मीयते ज्ञायते इति - यद्वा ञमाद्यं कं स्तावकं मानयति सम्मानयतीति।

२७. टङ्की - टङ्काख्यायुधवान्।

२८. ठलकः - ठलयो रुद्रेन्द्रयोः कं सुखं यस्मात् ठलकः। ठकल इति पाठे ठकौ रुद्रब्रह्माणौ रुद्रवायू वा लाति आददातीति - ठकलः।

२९. डं चन्द्रमण्डलं रं अग्निश्च तयोः प्रकाशो यस्मात् सः - डरकः।

३०. ढं निर्गुणं मुक्तं रमयती तच्छीलो ढरी अप्राकृतक्रीडावान्।

३१. णात्मा - ज्ञानात्मा।

३२. तारयतीति - तारः।

३३. थं शिलोच्चयं गोवर्धनं बिभर्तीति - थभः स्थिरा भा यस्य स इति वा।

३४. दण्डवान् - दण्डी।

३५. धन्वी - धनुर्धारी।

३६. नम्यः - सर्ववन्द्यः।

३७. परः - सर्वोत्कृष्टः।

३८. फली - मुख्यफलवान्।

३९. बली - बलवान्।

४०. भगः - ऐश्वर्यवान्।

४१. मनुः - ज्ञानी।

४२. यज्ञः - तन्नामा।

४३. रामः - मनोहरः।

४४. लक्ष्मीपतिः - लक्ष्मीस्वामी।

४५. वरः - श्रेष्ठः।

४६. शान्ता - सर्वसुस्वदायिनी संवित् ज्ञानं यस्य सः - शान्तसंवित्।

४७. यड्गुणः - ऐश्वर्यादिषड्गुणः।

४८. सारः - उत्कृष्टः आत्मा देहो यस्य अप्राकृतविग्रहः ।

४९. हंसः - शुद्धः ।

५०. लौ - मुक्तौ च तौ आलू ब्रह्मरुद्रौ च लालू लाल्वोरपि कं सुखं यस्मात् सः - लालुकः। द्वाभ्यां जगदुपलक्ष्यते। आश्च लुश्चेति यद्वा आश्च लवश्च आदिः सः तदभिमानी च तेषां कं यस्मादिति वा।

-इति तन्त्रसारटीकायां वेदव्यासकृतायाम्।।

# वेदप्रस्थान-उपनिषत्प्रस्थान गीताप्रस्थान-भागवततात्पर्येषु च हरेः परममुख्यतया सर्वशब्दवाच्यत्वोदहरणानि

## ऋग्भाष्ये

| समन्वितशब्दः | | शब्दप्रवृत्तिनिमित्तम् / निर्वचनं |
|---|---|---|
| १. | अग्निः | अग्रणीत्वम् - अग्रनेतृत्वम् ; अत्तिमत्तृत्वम् बहः संहर्तृत्वं हविषोऽत्तुत्वम् ; अङ्गनेतृत्वम् = सर्वशरीरप्रवर्तकत्वम् = विश्वप्रवर्तकत्वम् |
| २. | पुरोहितः | पूर्वमेव अशेषस्य अनादितः हितम् = प्रभुम्। |
| ३. | ऋत्विजं | यज्ञानां ऋत्विङ्नियामकत्वम् |
| ४. | देवम् | द्योतनात् निजयात् कान्त्या स्तुत्या व्यवहृतेः गत्या रत्या होतृसंस्थत्वात् देवं |
| | वा | द्योतनादेः कर्तृत्वात् |
| ५. | वायुः | बलत्वात् अयनात् वायुः । लोकस्य आयुर्गच्छति = प्राणधारणहेतुत्वात् वायुः। बन्धकत्वात् वायुः। |
| ६. | इन्द्रः | परमैश्वर्यात् इन्द्रः |
| ७. | मित्रः | मित्वा ज्ञात्वा त्राति + इति। |
| ८. | ऋतः | सर्ववस्तुषु अनुगतत्वतः |
| ९. | रुद्रः | रुजां द्रावणतो रुद्रः। |
| १०. | अश्विन। | आशुगतिमत्वात् शीघ्रावगतिमत्वात् (अश्विनौ) |

## (१) ईशावास्यभाष्ये

| | | |
|---|---|---|
| १. | अनेजत् | निर्भयत्वात् |
| २. | एकं | प्राधान्यात् |
| ३. | शुक्रम् | शोकराहित्यात् |
| ४. | अकायं | लिङ्गवर्जनात् |
| ५. | अस्नाविरम् | स्थूलदेहराहित्यात् |
| ६. | मनीषी | ईशितृत्वात् |
| ७. | स्वयंभूः | सदाऽनन्याश्रयत्वात् |
| ८. | पूषा | पूर्णत्वतः |
| ९. | यमः | नियमनात् |
| १०. | सूर्यः | सूरिगम्यत्वात् |
| ११. | अस्मि | नित्यास्तितामानात् |
| १२. | क्रतुः | ज्ञानरूपत्वात् |
| १३. | अमृतः | अतिरोहितविज्ञानात् |

## (२) तलवकारभाष्ये

| | | |
|---|---|---|
| १. | आः | पूर्णत्वात् |

## (३) काठकभाष्ये

| | | |
|---|---|---|
| १. | ज्ञः | अखिलज्ञतः |
| २. | अदितिः | अदनात् |
| ३. | हंसः | अखिलदोषैः नित्यहीनत्वात् साररूपत्वात् |
| ४. | बृहत् | पूर्णगुणत्वात् |

## (४) षट्प्रश्नोपनिषद्भाष्ये

| | | |
|---|---|---|
| १. | प्रजापतिः | प्रजानां पालनात् |

## (५) आथर्वणोपनिषत् भाष्ये

| | | |
|---|---|---|
| १. | प्राणः | प्रणयनात् |
| २. | वाक्ः | वक्तृत्वात् |
| ३. | मनः | मन्तृत्वात् |
| ४. | सत्यः | सद्गुणत्वात् |

## (६) माण्डूकभाष्ये

| | | |
|---|---|---|
| १. | ॐ | ओतमत्र जगद्यस्मात् |
| २. | सर्वम् | गुणपूर्तेः |
| ३. | आत्मा | आदनात् अदनकर्तृत्वात् |
| ४. | विश्वं | सर्वगम्यत्वहेतुतः |
| | वैश्वानरः | विश्वसम्बन्धीनरस्यानाशात् |
| ५. | तैजसः | चित्तस्थो दर्शयद्यस्मात् |
| ६. | प्राज्ञः | न बाह्यं ज्ञापयेद्यस्मात् |
| ७. | आत्मा | पूर्णत्वतः |
| ८. | प्रत्ययः | ज्ञानरूपत्वात् |
| ९. | सारः। शमः। | आनन्दरूपतः |
| १०. | प्रपञ्चः | विस्तृतेः |
| ११. | शिवः | निर्दुःखसुखरूपत्वात् |

## (७) एतरेयभाष्ये

| | | |
|---|---|---|
| १. | पंथा | नित्यं स्वरप्राप्तिहेतुत्वात् |
| २. | कर्म | कर्तृत्वात् मातृतः |
| ३. | ब्रह्म | गुणपूर्णत्वात् |
| ४. | सत्यं | साधुस्वरूपतः |
| ५. | आदित्यः | आदानात् सर्ववस्तूनां |
| ६. | पवमानः | संसारात् पावयित्वा महानन्दे मिनोतेः |
| ७. | उक्थः | उत्थापनात् |
| ८. | सत्यः | सर्वोत्तमत्वात्, पूर्णत्वात् सर्वज्ञत्वात् |
| ९. | प्राणः | सर्वप्रणयनात् |
| १०. | गिरिः | सर्वभूतानां गिरणात् |
| ११. | ब्रह्मगिरिः | गुणपूर्णतः अखिलस्य गिरणात् |
| १२. | असुः | सर्वस्य असनात् |
| १३. | भूति | ज्ञानैश्वर्यादिभूतितः |
| १४. | शतर्चिः | पुरुषेषु शतं वर्षगतेः |
| १५. | वसिष्ठः | वसतामुत्तमत्वात् |
| १६. | मूषकः | भक्तपापानां मोषणात् |
| १७. | अहं | अहेयत्वात् |
| १८. | अस्मि | असनात् मिनुतेश्च |
| १९. | त्वं | ततो वेत्तीति |

| | | |
|---|---|---|
| २०. | एषः | सर्वैश्वर्यस्वरूपत्वात् |
| २१. | आत्मा | नित्याततगुणत्वात् - आदानात्- अदनकर्तृत्वात् |
| २२. | वनस्पतिः | वननीयपतित्वात् |
| २३. | मेधा | अविस्मृतित्वात् |
| २४. | धृतिः | धारणरूपत्वात् |
| २५. | जूतिः | सर्वप्रेरकरूपत्वात् |
| २६. | स्मृतिः | सर्वदिशकालेषु समं रमते तस्मात् |
| २७. | क्रतुः | सर्वकर्तृत्वात् |
| २८. | सुपर्ण | परमानन्दरूपत्वात् |
| २९. | अहः | अहार्यत्वात् |
| ३०. | प्रत्नः | पुरातनत्वात् |

## (८) तैत्तिरीयभाष्ये

| | | |
|---|---|---|
| १. | स्वरः | स्वरतेः |
| २. | ब्रह्मकोशः | वेदावासत्वतः |
| ३. | अयं | समीपस्थत्वात् |
| ४. | अन्नं | उपजीव्यतः |
| ५. | भूः | स्फूर्तिरूपत्वात् |
| ६. | भुवः | भूरिवीर्यत्वात् |
| ७. | सुवः | सुबलरूपत्वात् |

## (९) छान्दोग्यभाष्ये

| | | |
|---|---|---|
| १. | ॐ | ओतत्वात् अवनात् मानात् अधिकोच्चत्वकारणात् आनन्दात् ओजसश्चैव भरणात्। |
| २. | उद्गीथः | उच्चत्वात् गीयमानत्वात् स्थानात् |
| ३. | इह | सर्वसामीप्यतः |
| ४. | अनिरुक्तः | अवाच्यत्वात् |
| ५. | साम | साधुत्वात् |
| ६. | वसन्तः | वासस्य सुखकारित्वात् |
| ७. | पशुः | पालनात् सुखरूपत्वात् |
| ८. | रसः | बलरूपतः |
| ९. | इदं | अतिसामीप्यात् |
| १०. | असत् | अगम्यत्वात् |
| ११. | कं | नैजानन्दबलोद्रेकात् |
| १२. | आपः | आपालनात् |
| १३. | रश्मिः | रतिरूपतः |
| १४. | एकमेवाद्वितीयं | समाभ्याधिकवर्जनात् स्वगतभेदाभावात् |
| १५. | सः | स्वातन्त्र्यात् |

## (१०) बृहद्भाष्ये

| | | |
|---|---|---|
| १. | समुद्रः | समुद्रेकात् |
| २. | वाजी | सर्वदा युद्धकर्तृत्वात् |

| | | |
|---|---|---|
| ३. | हयमः | हत्वा याति यतः शत्रून् तस्मात् |
| ४. | अदितिः | सर्वं वात्तीति |
| ५. | उशना | कामस्य प्रेरणात् |
| ६. | सर्वकर्मा | सर्वान्तिर्यामित्वात् |
| ७. | आत्मा | आप्तकामत्वात् ; व्याप्तेः सर्वनियन्तृत्वतः |
| ८. | राजा | स्वामित्वात् |
| ९. | अः | अदोषत्वात् गुणोद्रेकात् |
| १०. | अद्वितीयः | अविरोधात् |
| ११. | एकः | समवर्जनात् |
| १२. | सः | दूरस्थत्वात् |
| १३. | काममयः | सृष्ट्यादीच्छास्वरूपत्वात् |
| १४. | क्रोधमयः | सर्वदुष्टप्रतीपत्वात् |
| १५. | धर्ममयः | सुखादिधर्मरूपत्वात् |
| १६. | मुनिः | नित्यबोधात्मकत्वात् |
| १७. | ब्राह्मणः | वेदाख्यब्रह्मणाऽण्यत्वात् |
| १८. | समिधः | समोधनात् |
| १९. | धूमः | शत्रूणां धूत्कारात् |

## (११) भागवततात्पर्ये

| | | |
|---|---|---|
| १. | सत्यं | निर्दुःखानन्दरूपत्वात् |
| २. | परं | निर्दोषगुणपूर्णत्वात् |

| | | |
|---|---|---|
| ३. | अकर्ता | अप्रयत्नात् फलानां च विवर्जनात् |
| ४. | सात्वतः | सात्विकस्नेहात् |
| ५. | सत्वः | आनन्दरूपतः ; निःशेषगुणपूर्णत्वात् |
| ६. | धर्मरूपः | धारकत्वात् |
| ७. | भगः | ऐश्वर्यात् |
| ८. | सत्यः | आनन्दरूपत्वात् केवलसारत्वात् |
| ९. | ऋतः | ज्ञानस्वरूपतः |
| १०. | यशः | अलं प्रसिद्धत्वात् |
| ११. | कालः | संहारकत्वात् गुणपूर्णत्वात् |
| १२. | चिन्तामयः | सञ्चिन्तितानां चिन्तितदत्वात् |
| १३. | स्वः | अनन्याधीनशक्तित्वात् |
| १४. | एकात्मा | प्रधानत्वात् समस्ततः |
| १५. | माया | सर्वोत्तमत्वात् |
| १६. | निर्मायिः | अप्राकृतस्वरूपत्वात् |
| १७. | अरूपकः | अव्यक्तत्वात् |
| १८. | बीजं | जगतो व्यञ्जनात् |

# एतरेयोषदुक्तत्रयोविंशतिनाम्नां भगवत्परत्वनिर्वचनम् एतरेयभाष्ये

## अध्याय - ६

यो विष्णुर्हृदयमिति हृद्गतत्वात्प्रकीर्तितः।
मन्तृत्वान्मनइत्येव यच्च ज्ञातृस्वरूपतः।
एतत्सन्निहितत्वाच्च पूर्णत्वादेति कीर्तितः ।
इतत्वाच्च ततत्वाच्च स इतन्नाम केशवः।
गुणानामुच्चयो यस्मात् स च इत्येव शब्दितः।
सम्यग्ज्ञानस्वरूपत्वात् संज्ञानमिति कीर्तितः।
आततज्ञानरूपत्वात् आज्ञानं भगवान् हरिः।
विविधज्ञानरूपत्वात् विज्ञानमितिकीर्तितः।
प्रकृष्टात्मगुणज्ञानरूपः प्रज्ञानमुच्यतेः।
अविस्मृतित्वान्मेधा स दृष्टिर्दर्शनरूपतः।
धृतिर्धारणरूपत्वात् मतिर्मासु ततत्वतः।
मनुनाम्नामजादोनां मनीषेशो यतो हरिः।
सर्वप्रेरकरूपत्वात् जूतिरित्यभिधीयते।
सर्वदेशेषु कालेषु स्वरूपेषु च सर्वशः।
समं रमत इत्येव स्मृतिर्नाम जनार्दनः।
सर्वस्य क्लृप्तिकर्तृत्वात् संकल्प इति गीयते।
क्रतुः स सर्वकर्तृत्वात् असुरप्यसनाद्धरिः।
अमेयानन्दरूपत्वात् काम इत्यभिधीयते।

अवशः स स्वतन्त्रत्वात् त्रयोविंशतिनामकम्।

यो वेदैवं हरिं सम्यङ् मुच्यतेऽखिलसंस्मृतेः॥ इति एतरेयसंहितायाम्

अत्रोक्तानि त्रयोविंशतिनामानि हरेः नामधेयानि इति ज्ञातव्यानि इति श्रुत्यादेशः, व्याख्यातं च ऐतरेयसंहितायां।

बृहद्भाष्योक्तकतिपयहरिवाचकैकाक्षराः

(बृ.उ. अ. ३-अन्तर्यामिब्राह्मणं)

''योऽअन्तरो यमयति'' इति द्वितीयो यशब्दो विष्णुपर्यायिशब्दः।

**अकयप्रविसंभूमसखहा विष्णुवाचकः।**
**एकाक्षरा अ इत्येष निर्दोषत्वाज्जनार्दनः।**
**आनन्दत्वात्क इत्युक्तः पूर्णत्वात् य इतीर्यते॥**

**-इत्यादि शब्दनिर्णये॥**

ABMM Vol. IV P. 329

**।। ॐ अनन्तजिते नमः ।।**

जसातये त्वंह्येक ईशिषे सनाद मृक्त ओजसा
विश्वस्य प्रस्तोभ विद्वान्पुरा वा यदि वे हास नूनम् ।। ३१०।।

अत्र जसात य इत्यादि नूनमित्यन्तमेका। अत्र **अनन्तजिन्मूर्तिः।** अनन्तान् जीवान् जयतीति। न विद्यते अन्तको जिन् जेता च यस्येति वा। अनन्तान् पदार्थान् जयति मनसा प्राप्नोति जानातीति यावदिति वा।। ३१०।।

अथाष्टमी - इषं नो मित्रावरुणाकर्तनेळां पीवरीमिषं कृणुहीन इन्द्र।

**इषमिति।।** हे मित्रावरुणा मित्रावरुणौ। मित्वा त्राणात् वरानन्दत्वाच्च तच्छब्दवाच्य द्विरूप भगवान् नोऽस्माकं इषमन्नम् ऐश्वर्यं वा। 'ईश ऐश्वर्ये' इत्यस्येदं रूपम्। इळाम्। भूमिं वाचं वा। उभयनामसु पाठात्। अथवा इळामीड्या। 'ईड स्तुतौ'। स्तुत्यां इषमिति सामानधिकरण्यम्। कर्तना कुरुतम्। तथा हे इन्द्र भगवन् नः पीवरीं पुष्टां इषमिळां च कृणुहि कुरु।। २९२।।

अथ नवमी - **शं पदं मद्यं रयिषणि न सोमो अव्रतं हिनोति न स्पृशद्रयिः।**

**शं पदमिति।** पदं भगवतः स्वरूपं शं सुखात्मकम्। मघं यशोरूपम्। रयीषणि। रयिः भारती तस्या ईशो रयीषः। प्राणः। शस्य षत्वम्। एषस्य प्रभृथे पुरुष इत्यादिवत्। तं नयतीति तथोक्तम्। नयतेः कर्तरि क्विप्। धातोः ह्रस्वता। यद्वा भक्तानां रयिं सनोतीति रयीषणि। आधिक्यार्थे दीर्घः। यस्तु पुमान् अव्रतो भगवद्विषयककर्मरहितः तं सोमः सोमयागोऽपि न हिनोति। न वर्धयति। हि गतौ वृद्धौ च । तेन सोमयागः कृतोऽपि व्यर्थः भवतीत्यर्थः। रयिः भारत्यपि तं न स्पृशत् न स्पृगति। तत्कृतवेदाध्ययनं च व्यर्थम् अनर्थकरं च भवतीत्यर्थः। रयिः धनं वा न स्पृशति। सम्पदा हीनो भवतीत्यर्थः।। २९३।।

भ्यो वृत्रं धनुभ्यो अस्फुरःनिर्बुदस्य मृगयस्य-
मायिनो निःपर्वतस्य गा आज निरग्नयो रुरुचुरः || ५१८||

अत्र भ्यो वृत्रमित्यादि रुरुचुरित्यन्तमेका । अत्र **अनन्तात्ममूर्तिः।** अनन्तानसुरान् अज्ञानकामादिदोषान्वा अत्ति संहरतीति। अनं प्रणं तन्वन्तीत्यनन्ता आपः। 'आपोमयः प्राण' इत्यादि श्रुतेः। ताः अतयति मेघान्निर्गमयतीति वा। अनन्तान् अग्निसूर्यादीन् अतयति प्रवर्त्तयतीति वा।। ५१८।। इति बा.तृ.पञ्चमे सप्तमे अष्टाविंशो वर्गः।।

तत्राद्या - यदिन्द्र प्रागपागुदङ् न्यग्वा हूयसे नृभिः।
सिमा पुरू नृषूतो अस्यानवेऽसि प्रशर्ध तुर्वशे।।

**यदिन्द्रेति।।** हे सिम जगद्बन्धक। 'षिञ् बन्धने'। अस्मान्मक्। इन्द्र विष्णो अस्मान्मक्। यत् यदा प्राक् पूर्वतः। अपाक् पश्चिमतः। उदक् उत्तरतः। न्यक् दक्षिणतो वा सर्वत्र नृभिः अधिकारिभिः हूयसे स्तूयसे। तत् तदा पुरु अधिकं नृषूतः। तेषु स्तोतृषु सर्वेष्वपि नृषु सुष्टु ऊतः प्रविष्टोऽसि भवसि। विशेषतः सन्निहितो भवसीत्यर्थः। किञ्च आनवे अनेषु प्राणिषु उच्चत्वादनुर्मुख्यप्राणः। तद्भक्त आनवस्तस्मिन्। तुर्वशे मनुष्येऽपि। तुर्वशाः द्रुह्यव इत्यादि मनुष्यनामसु पाठात्। प्रशर्ध प्रशर्धः। अविभक्तिकनिर्देशोऽयम्। प्रकृष्ट सुखबलप्रदोऽसि। ये स्वभक्ताः मुख्यप्राणभक्ताश्च तान् सर्वानपि त्वमनुगृह्णासीति भावः।।

वायुपक्षे आनवे मुख्यप्राणस्वामिनि तुर्वशे विष्णौ असि। तदाधारकोऽसीति यावत्। प्रशर्धेति सम्बोधनम्। अन्यत्समम्।। इन्द्रपक्षे आनवे अनुपुत्रे तुर्वशे तन्नाम्नि राज्ञि प्रशर्धश्चासीति।। ५८९ ।।

|| ॐ अनन्ताय नमः ||

वद्धवं वसूयवो वसुपतिं शतक्रतुं स्तोमैरिन्द्रं
हवामहे न पापासो मनामहे नारायासो न || ६६० ||

अत्र वद्धवमित्यादि अरायासो नेत्यन्तमेका। अत्र अनन्तमूर्तिः। अनन्ताः स्तोमा अस्य सन्ति स्तुतिरूपा इति। यद्वा अन्तशब्दो विनाशापरपर्यायदोषवाची। दुष्टे नष्टशब्दप्रयोगात्। तथाच पापदारिद्र्यादिदोषशून्या अनन्ताः। तादृशाः भक्ता अस्य सन्तीति। अर्श आद्यच्॥ ६६० ||

अथ दशमी - उग्रं युयुज्म पृतनासु सासहिमृणकातिमदाभ्यम्।
वेदा भृमं चित् सनिता रथीतमो वाजिनं यमिदू नशत्॥१०॥

**उग्रमिति॥** उग्रं पृतनासु सङ्ग्रामेषु ससहिं शत्रुवेगसहम्। ऋणकातिं ऋणं रणं युद्धं कामयत इति तथोक्तस्तम्। अदाभ्यम् अस्तम्भनीयं भगवन्तं पृतनासु युयुज्म योजयामः। वाजिनं युध्यमानं यं सनिता प्रतिभटतया लब्धा सन्। रथितमश्चित् महारथिकोऽपि नशदित् नश्येदेव। तं भगवन्तं भृमं भ्रामकं शत्रुसञ्चालकमहं वेद वेद्मि। उ एव ॥ ७२९॥

|| ॐ अनन्ताय नमः ||

हि विश्वानि पार्थिवामेको वसूनिपत्यते गिर्वणस्तमो
अध्रिगुः सनो नियुद्भिरापृण कामं वाजेभिः || ८८८||

अत्र हि विश्वानीत्यादि वाजेभिरित्यन्तमेका। अत्र **द्वितीया अनन्तमूर्तिः।** अनन्तवसुनियामकत्वादनन्त इति। 'तदधीनत्वात्तदर्थवत्' इति न्यायात्। अनन्ताः वेदाः प्रतिपादकत्वेनास्य सन्तीति वा। अनन्तानामपि वेदानामनन्तः

साकल्येनाप्रतिपाद्य इति वा। अत्रावृत्त्योक्तार्थो ज्ञेयः। अनन्तकामदातृत्वाद्वा।। ८८८।।

अथ द्वाविंशी - तद् वो गाय सुते सचा पुरुहूताय सत्वने ।
शं यद् गवे न शाकिने ।। २२ ।।

तद्व इति।। हे उद्गातारः। सोमे सुते सति सचा सुखेन सहैव वा वः स्वामिने पुरुहूताय। सत्वने शत्रुसादकाय। गवे न शाकिने वृषभवच्छक्तिमते। आयुधानपेक्षयैव शत्रुहननसमर्थाय भगवते। यत् स्तोत्रं शं सुखकरं भवेत्। तत् तादृशं स्तोत्रं गाय गायत।। १०३०।।

अथ त्रयोविंशी - न घा वसुर्नि यमते दानं वाजस्य गोमतः।
यत् सीमुप श्रवद्गिरः।। २४ ।।

**न घेति।।** वसुर्वरसुखो जगन्निवासो वा भगवान् यत् यदि गिरोऽस्मत्स्तुतिरूपाः वाचः सीं सम्यक् उपश्रवत् उपश्रृणुयात्। तर्हि गोमतो गोयुक्तस्य वाजस्यान्नस्य दानं न घ नैव। नियमते। 'यम उपरमे'। उपरमयति नैवोपरतं करेति। सन्ततमभीष्टं ददात्येवेत्यर्थः।। १०३१।।

।। ॐ अनन्तरूपाय नमः।।

जकृत्येषु सत्पते वृत्रे वाऽप्श्वभिस्वभि शूर मन्दसे।
के ते नर इन्द्र येत इषे ये ते सुम्नं सधन्यम्।। ९३३।।

अत्र जकृत्येष्वित्यादि स धन्यमित्यन्तमेका। अत्र अश्वभीति कम्पेनाक्षरद्वयं ग्राह्यम्। जागतपादस्य द्वादशाक्षरतया भाव्यत्वेन दशाक्षराणामेवात्र सत्वेन द्व्यक्षरन्यूनत्वात्। स धन्यमिति कम्पस्तु उत्तरबृहत्यां संयोजनीयः। तथाच

षट्त्रिंशत्वसिद्धिः। अत्र **अनन्तरूपमूर्तिः।** अनन्तानि कर्माणि रूपयति निरूपयति अन्तर्यामितया स्थित्वा निर्वर्तयतीति। अन्ते समीपे स्वहृदयस्थाने रूप्यते निरूप्यते सर्वसमर्पणविधिना पूज्यते भगवानेतैरित्यन्तरूपाः। न विद्यन्ते दुर्लभा इति यावत्। अन्तरूपा यस्येति वा॥ ९३३॥

अथ चतुर्थी -**भुवस्त्वमिन्द्र ब्रह्मणा महान् भुवो विश्वेषु सवनेषु यज्ञियः।**
**भुवो नॄंश्च्यौत्नो विश्वस्मिन् भरे ज्येष्ठश्च मन्त्रो विश्वचर्षणे॥४॥**

**भुव इति॥** हे विश्वचर्षणे सर्वप्रजास्वामिन् इन्द्र विष्णो। त्वं ब्रह्मणा वेदेन महान् भुवः अभवः। सर्वोत्तमत्वेन सिद्धोऽसि। विश्वेषु समस्तेषु त्रिष्वपि सवनेषु यज्ञियो यज्ञाभोक्ता त्वमेव भुवः अभवः। विश्वस्मिन् सर्वस्मिन्नपि भरे युद्धे। नॄन् नृणां योद्धृजनानां च्यौत्नो बलप्रदश्चाभुवः। त्वमेव ज्येष्ठो मन्त्रो मन्त्रवान् आलोचनकर्ता। सर्वेषां शत्रुजयाद्युपायशिक्षकश्चासीति यावत्। मानात् त्राणाच्च मन्त्रो ज्ञाता रक्षकश्चासीति वा॥ १०८०॥

॥ ॐ अनन्तश्रिये नमः॥

इयक्षान् के ते वरजायासुर्याय हिन्विरे के अप्सुस्वा-
सुर्वरासु पौंस्ये भुवस्त्वमिन्द्र ब्रह्मणा महान् भु॥ ९३४॥

अत्र इयक्षानित्यारभ्य महान् भु इत्यन्तमेका। स धन्यमिति पूर्वकम्पेन सह षट्त्रिंशत्वम्। अत्र **अनन्तश्रीमूर्तिः।** अन्ताय शत्रुविनाशाय श्रयन्ते भगवन्तमित्यन्तश्रियः। अन्तः अध्यात्मं कर्मबलादि नियामकतया तं श्रयन्ते उपासत इति वा अन्तश्रियः। दुर्लभत्वात् न विद्यन्त इत्यत्ते यस्येति अनन्तो नित्यो वेदः। श्रयन्ते एैंनमिति श्रीः सर्वाश्रयो महान्। अनन्तेन वेदप्रमाणेन श्रीर्महान् सिद्ध इत्यनन्तश्रीरिति वा॥ ७३४ ॥

अथ पञ्चमी - अवा नु कं ज्यायान् यज्ञवनसो महीं त ओमात्रां कृष्टयो विदुः।
असो नु कमजरो वर्धाश्च विश्वेदेता सवना तूतुमा कृषे ॥ ५ ॥

**अवेति**॥ हे अव रक्षक भगवान्। यज्ञवनसः यज्ञैर्वननीयात् भजनीयात् त्वत्तः ज्यायन् श्रेष्ठः कं नु को नु न कोऽपि। ते तव महीं महतीं ओमात्राम् आसमन्तात उत्कृष्टमंशमपि कं काः कृष्ट्यः प्रजाः विदुः। न का अपि। अंशनामपि देशतः कालतो गुणतश्चानन्तत्वात्। ते ओमात्रां कृष्ट्यो ब्रह्मादिप्रजा। महीं विदुरिति वा। किं च त्वमेवाजरो जरारहितः। वर्धाः अभिवृद्धिकरः। नित्यवृद्धिकरश्च वा असः असि। त्वदन्यस्तु एतादृशः कं नु न कोऽपि। किं च त्वमित् त्वमेव विश्वा विश्वानि समस्तानि एता एतानि सवनानि यज्ञान् कृषे कुरुषे। आकर्षसि वा। समस्तयज्ञकर्ता तद्भोक्ता च त्वमेवेति यावत्। तस्मात् त्वंतूतुमा। अतिशयेन तुमुलः परमाश्चर्यरूपोसि॥ १०८१॥

# श्रीशेषचन्द्रिकाचार्यव्याख्यानम्

॥ ॐ अनन्तजिते नमः॥

शं पदं मघं रयीषणि न सोमो अव्रतं हिनोति न
स्पृशद्रयिः। एष ब्रह्मा य ऋत्विय इन्द्रो नाम श्रुतः ॥ ३१३॥

हे इन्द्र रयीषणि रयिश्च इट् रयीषौ, उपलक्षणमेतत्, अनन्तान्यपि तान्यस्य सन्तीति रयीषी, इकारस्याकारः यद्वा रयेः सन् लाभो यस्य सः रयिषण्, व्यत्ययेन दीर्घः, तस्मिन् बहुवित्तवति त्वयि शं सुखसाधनं पदं गतिसाधनं मघं यज्ञसाधनं सोमचरुपुरोडाशादिद्रव्यम् अस्माभिः समर्पितमस्तु। यतः अव्रतं त्वत्पूजात्मककर्मरहितं जनं सोमो देवः न हिनोति न वर्धयति, रयिश्च न स्पृशत् न स्पृशति, तत इति सम्बन्धः। य इन्द्र नाम प्रसिद्धः एष ऋत्वियः ऋत्विक्षु याज्यः एष ब्रह्मा परिपूर्णश्च।

अनेनानन्तानि भोग्यानि जयतीति निरुक्तेः **अनन्तजिन्मूर्तिरत्र ॥ ३१३॥**

---

एष ब्रह्मेत्यादितिस्रो द्विपदा ऋचः शाखान्तरगताः शंसनीयतया आरण्यके पठिताः॥

॥ ॐ अनन्तात्मने नमः॥

सव्यामनु स्फिग्यं वावसे वृषा न दानो अस्य रोषति।
मध्वा सम्पृक्ताः सारघेण धेनवस्तूयमेहि ॥ ५२८॥

हे इन्द्र युद्धकाले सव्यां स्फिग्यं सव्यबाहुमनु सम्यग् ववसे चालयसि। किञ्च वृषा श्रेष्ठः भवान् अस्य यजमानस्य दानः दाता सन् न रोषति न कुप्यति। सारघेण मधुमक्षिकानिर्मितेन मध्वा मधुवहत्वादुद्भूतेन(?) सोमरसेन धेनवः धेनुविकाराः पयांसि सम्पृक्ताः सन्ति। तस्मात् त्वं तूयं तूर्णमेहि।

अनेन ''अन्तोऽस्त्री निश्चये नाशे स्वरूपेऽग्रेऽन्तिकेऽन्तरे'' इत्युक्तेः नाशहेतुत्वादन्तो रोषः। यद्वा अति अदि बन्धने इत्युक्तेर्बन्धनकर्मणः अतेः अच्प्रत्ययः, इदित्वान्नुमागमः, अन्तति बध्नातीति बन्धकत्वादन्तो रोषः, न विद्यते भक्तेषु अन्तो रोषो यस्य सः अनन्तः। आङ् पूर्वाद् ददातेर्मनिन् प्रत्ययः, आत्मा दाता, **अनन्तश्चासावात्मा चेत्यनन्तात्मा इति निरुक्तेः** न दानो अस्य रोषतीत्यनेन सूचनाद् **अनन्तात्ममूर्तिरत्र**॥ ५२८॥

॥ ॐ अनन्ताय नमः॥

वसूदिद्वपति दाशुषे। वज्री सुशिप्रो हर्यश्व इत् करदिन्द्रः
क्रत्वा यथा वशत्। यद् वावन्थ॥ ६७३॥

वज्री सुशिप्रो हर्यश्व इन्द्रः दाशुषे यजमानाय वसु द्रव्यं उद्वपति इत् ददात्येव। स इन्द्रः यत्किंचिद्रक्षणादिकं वा कर्तुं यथा वशत् इच्छति तथा करत् करोत्येव। अव्याहतसङ्कल्प इत्यर्थः। (शिष्टमुत्तरान्वयि)।

**अनेनान्तो विनाशो नास्त्यस्य सङ्कल्पस्येत्यनन्त** इति निरुक्तेः इन्द्र क्रत्वेत्यादिना सूचनाद् **अनन्तमूर्तिरत्र**॥ ६७३॥

॥ ॐ अनन्ताय नमः ॥

गोमतः। यत् सीमुप श्रवद् गिरः। कुवित्सस्य प्र हि
व्रजं गोमन्तं दस्युहा गमत्। शचीभिरप नो वरत् ॥ ९९१॥

स इन्द्रो यद् यदि गोमतः स्तुवतो गिरो वचनानि उप श्रवत् शृणुयात् सीम् तर्ह्येव दस्युहा दस्यूनां हन्ता सन् कुवित्, कुविदिति बहुनाम, बहून् सस्यति हिनस्ति, परद्रव्यणामपहर्तेति यावत्। तस्य कुवित्सस्यासुरस्य स्वभूतं गोमन्तं व्रजं

गोष्ठं प्रगमत्। तं हत्वा तदीयगोधनं भक्तेभ्यो दातुं गच्छतीति यावत्। हि यस्मादेवं भक्तवत्सलः तस्मात् शचीभिरात्मीयैः कर्मभिः प्रजाभिर्वा नोऽस्माकं गाः ज्ञानानि अपवरत् निगूढास्ता अपावृणोत्।

**अनेन अन चेष्टायामित्यतो** भावे क्विप्**, तनु विस्तारे इत्यतः** कर्तरि डः। **अनं गमनं तनोतीति अनन्तः,** द्वितीयाया अलुक्। असुराहृतगोग्रहणाय गच्छतीति यावत्। इति निरुक्तेः कुवित्सस्य व्रजं दस्युहा गमदित्यनेन सूचनाद् **अनन्तमूर्तिरत्र।। ८९१ ।।**

।। ॐ अनन्तरूपाय नमः।।

के अप्सु स्वासूर्वरासु पौंस्ये। भुवस्त्वमिन्द्र ब्रह्मणा
महान् भुवो विश्वेषु सवनेषु यज्ञियः। भुवो नॄंश्च्यौत्नः ।। ९३५।।

हे इन्द्र स्वासु स्वकीयासु उर्वरासु उरुवरास्वतिश्रेष्ठासु अप्सु कर्मसु त्वत्पूजात्मिकासु के हिन्विरे के गच्छन्ति, अकुर्वन्निति यावत्। किञ्च तव पौंस्ये जगत्सृष्ट्यादिसामर्थ्यविषये के हिन्विरे के व्यजानन्। त्वत्सामर्थ्यपरिज्ञाना-दिकमपि दुर्लभमेवेत्यभिप्रायः। हे इन्द्र ब्रह्मणा स्तोत्रेण महान् परममुख्यया वृत्त्या प्रतिपाद्यः एकेन रूपेण भुवोऽभुवः। विश्वेषु सवनेषु त्रिष्वपि सवनेषु रूपान्तरेण यज्ञियो यज्ञे अभिव्यक्तये भुवः अभवः। रूपान्तरेण नॄन् अशेषप्राणिनः प्रति च्यौत्नः बलदो भुवः। तेषु तेषु कार्येषु रूपान्तरेण कर्ता अभव इति तात्पर्यम्।

**अनेन अनन्तानि रूपाणि यस्य सः अनन्तरूप इति निरुक्तेः** ब्रह्मणा महानित्यादिना सूचनाद् **अनन्तरूपमूर्तिरत्र।।** ९३५।।

।। ॐ अनन्तश्रिये नमः।।

**विश्वस्मिन् भरे ज्येष्ठश्च मन्त्रो विश्वचर्षणे। अवा नु कं**
**ज्यायान् यज्ञवनसो महीं त ओमात्रां कृष्टयो विदुः ।। ९३६।।**

हे विश्वचर्षणे इन्द्र त्वं विश्वस्मिन् भरे युद्धे ज्येष्ठः प्रशस्यः, शोभस इति यावत्। मन्त्रः मन्ता गोप्यश्च शोभसे हि। इन्द्र त्वमस्मान् प्रति नु निश्चितं अव शोभसे, अवतिरत्र कान्त्यर्थः। अत एव यज्ञवनसो यज्ञैर्वननीयस्य त्वत्तो ज्यायान् उत्तमपुरुषः। कं कः, इत्याक्षेपः। अत एव कृष्टयः सज्जनाः ते महां महतीं ओमात्रान् आ समन्तादनन्तां शोभां विदुः जानन्ति।

**अनेन** श्रिञ् श्रयणे इत्यतः ''क्विप् वचिप्रच्छिश्रिद्रुस्रुकठप्रुज्वां दीर्घोऽसंप्रसारणं च'' इति सूत्रेण क्विप्, दीर्घ ईकारः सम्प्रसारणनिषेधश्च। श्रीर्वेषरचनाशोभेत्युक्तेः श्रयत इति श्रीः शोभा कान्ति। **अनन्ताः श्रियो यस्य स अनन्तश्रीरिति निरुक्तेः** विश्वस्मिन् भरे ज्येष्ठ इत्यादिना सूचनाद् **अनन्तश्रीमूर्तिरत्र** ॥ ९३६॥

**॥ श्री कृष्णार्पणमस्तु ॥**

## Extract from “Origin of Sree Padmanabha Swamy Temple”

Anantankatu of forest of Ananta, the snake chief and close attendant of Sree Padmanabha Swamy seems to be one of the earliest labels of identification bestowed on this area in folk-lore. Some scholar point out that since the Temple has undoubted earlier existence, the other names of this city would possess greater age. It is well known that ‘bliss’ is synonymous with ‘Brahman’ as is emphasised by the declaration Aanando Vai Brahma. The terms Syanadoora Puri or Syanadoorapuram – the city of Maha Vishnu (whose one name is Aananda or bliss which is Brahmam) or “the City of Bliss” itself, have appeared in the works of early origin and have re-surfaced much later on also as Syanandoorapuram – the city where bliss or Brahmam is within reach as sung by the sages. This is supported by the Tulu Brahmin author of Syanandoora Purana Samuchayam (4269 Kali Year). He states that the place came to be known as Syanandoora as the ancient sages considered Aananda or transcendental bliss not far off from this city. It also bore the name Aanandapuram (meaning same as above) which in course of time got abbreviated to Anandapuram and this later on became Anantapuram or Anantasayana Nagari both meaning the city of Ananta or the city of the one who reclines on Ananta – Padmanabha. The prefix ‘Thiru’ got added on at a later stage.

## Extract of Sthala Puranam

### The Story about the Place

### Divakara Muni and the Gujarat Connection

This is a comparatively unknown version and puts forth one of the two claims in existence about Divakara Muni. Here it is held that Divakara Muni hailed from Gujarat where a great civilization flourished on the banks of the Sindu river (Indus) and a port town named Lotthal thrived there. Many excavations substantiate this claim.

### Divakara Muni and Tulu connection

The second and decidedly more popular version has it that when Divakara Muni, a Tulu Brahmin Sage, was doing penance in Athartha Desam, in Kumbala near Mangalore, a radiant two year old child appeared before him, one day. A great love was born in the heart of this ascetic for this little boy and he asked him who he was. The child replied that he had no father, no mother and no home in particular. The sage then requested the little one to make his home with him. The child agreed on one condition that if ever he felt humiliated he would not continue to stay there even one minute more. There came a day when the little boy was in an extremely naughty mood. The sage's patience came to an end when the little one put the sacred Salagrama (a sacred stone pertaining to Vishnu) from Divakara Muni's Puja into his little mouth. In irritation he sharply reprimanded the child. Immediately, true to his prior condition, the child ran away, proclaiming as he sped on, that if ever the Muni desired to see him, he would have to go to Anantankatu and seek him out there. Then realisation as to the true nature of his little companion dawned on the sage and in despair he ran in the direction taken by the child. Finally after searching long he reached a forest near the sea-shore just in time to see the child disappear into a big Iluppa tree (Basia Longifolia – Indian Butter Tree). In a trice the tree crashed down. Wonder of wonders it became transformed into a mightly form of Lord Vishnu resting on Ananta as Sree Padmanabha Swamy, with the head touching Thiruvallom, body spreading across Tiruvananthapuram and the feet extending up to Thrippadapuram or Trippappoor ! This was the divine vision granted to Divakara Muni. Unable to imbibe a revelation of such magnitude stretching to eighteen miles in length, the saint prayed that the Lord be pleased to limit His form to three times the length of the Muni's Yoga Dandu (staff) to accommodate his limited, mortal vision. His plea was heard and the mighty Form shrank to the required dimensions. Thereafter the sage performed the worship of the Lord in great

adoration. Pleased by his devotion the Lord decreed that henceforth Tulu Brahmins hailing from Divakara Muni's homeland conduct the daily Pujas for Him. The strong Tulu Brahmin tradition existing in the Sree Padmanabha Swamy Temple thus stands explained. In this context Divakara Muni is given a period dating to the month of Idavom, 225 ME corresponding to May/June of 1050 AD.

Since the story of this sage finds a place in the Brahmanda Puranam in Golavistaram, stanzas 1-15, in the Samuchayam and in Sree Swathi Thirunal's Prabandham, the acceptance gained by it in relation to other versions is by far the greatest. Due to clash in time frames, the conclusion is reasonably arrived at that there were two Divakaras bound to this Temple who lived in different centuries.

**Vilvamangalathu Swamiyar and the Namboodiri connection**

This is the most accepted version regarding the consecration of the Temple and relates to the famous Namboodiri Brahmin sage by name Vilvamangalathu Swamiyar. Three Vilvamangalathu Swamiyars have lived during different times, according to same. Vilvamangalam I dates to the 9th century and Vilvamangalam III to the 16th century (about 1585 AD) with Vilvamangalam II coming in between. Even if the 9th century saint is accepted as the central figure in this Sthala Puranam, ananchronism is glaringly obvious. The story basically runs on the same lines as that of Divakara Muni, deviating only at certain points. The location is in North Malabar and the Kasargode Sree Anantapuram Temple features in both. Here the child does not stay with the Swamiyar but would faithfully appear every day during the Puja time of the sage. The Salagrama episode is the same and here the saint shows his annoyance by pushing back the little one with the back of the hand. (To this day it is deemed inauspicious to push someone away, with the back of the hand). The next difference in the story surfaces a little later on. It is said that the Sage ran after the child but soon lost track of him. The sound of the bells on the anklets adorning

those little feet and on the waistband guided him for some more time, then they too ceased. The Sage wandered from place to place, consecrating many renowned temples of today on the way and getting many divine experiences. He moved from North Kerala to the South in his ceaseless quest of the divine Child and Anantankatu where he would find him. One evening he rested under a tree, physically and mentally weary. From the opposite side where stood the hut of a Plulaya, he heard the raised voice of an angry Pulayi threatening her baby who would not stop crying, that she would throw it into Anantankatu if it did not stop wailing. The joyous Sage rushed to the hut and in answer to his question, the woman pointed to the near-by forest which was the destination of his long search. After blessing her and taking a single lighted wick from her to aid his progress into darkness in search of the Supreme Light, the Swamiyar entered the forest. Before long, the dearly familiar sound of the waistbells and anklets could be heard. In the pre-dawn hours, suddenly an iluppa tree crashed dowen with a mighty sound before him and a great radiance manifested. On reaching the spot he got the Darsanam or vision of God as Sree Padmanabha reclining on the serpent chief Ananta. The extent of this form and the subsequent reduction in size in response to the Sage's prayers are the same as in the story about Divakara Muni. Having nothing else to offer to the Lord, the Swamiyar took a small unripe mango from a nearby tree and placing it in a dry coconut shell submitted the same to the Lord in an overflow of emotion. The offering of a salted mango in the coconut shell which is reported to be the same one used by the Swamiyar though now covered with gold and gem studded, continues as an important daily Nivedyam to this day. In the connection it merits mention that the wood of this Iluppa tree is believed to have been utilised to carve the figure of Sree Padmanabha Swamy and till the time of Marthanda Varma the Great, the Idol is seen to be of this wood. The Naduvil Madhom Pushpanjali Swamiyar’s premises lying to the west of Sree Padmanabha Swamy Temple also contains a Sree Krishna Temple which is believed to have been consecrated on the Vilvamangalathu Swamiyar's Samadhi. This adds much weight to the sage’s link with the Temple.

# Names of Large numbers

This article lists and discusses the usage and derivation of names of large numbers, together with their possible extensions.

The following table lists those names of large numbers which are found in many English dictionaries and thus have a special claim to being "real words". The "Traditional British" values shown are unused in American English and are becoming rare in British English, but their other language variants are dominant in many non-English-speaking areas, including continental Europe and Spanish-speaking countries in Latin America; see Long and short scales.

**Standard Dictionary numbers**

| Name | Short Scale US & modern British Eurpoe, India etc. | Long scale continental Europe, archaic British and India |
|---|---|---|
| Million | $10^{6}$ | $10^{6}$ |
| Milliard | | $10^{9}$ |
| Billion | $10^{9}$ | $10^{12}$ |
| Billiard | | $10^{15}$ |
| Trillion | $10^{12}$ | $10^{18}$ |
| Quadrillion | $10^{15}$ | $10^{24}$ |
| Quintillion | $10^{18}$ | $10^{30}$ |
| Sextillion | $10^{21}$ | $10^{36}$ |
| Septillion | $10^{24}$ | $10^{42}$ |
| Octillion | $10^{27}$ | $10^{42}$ |
| Nonillion | $10^{30}$ | $10^{54}$ |
| Decillion | $10^{33}$ | $10^{60}$ |

| | | |
|---|---|---|
| Undecillion | $10^{36}$ | $10^{66}$ |
| Duodecillion | $10^{39}$ | $10^{72}$ |
| Tredecillion | $10^{42}$ | $10^{84}$ |
| Quindecillion (quinquadecillion) | $10^{48}$ | $10^{90}$ |
| Sexdecillion (Sedecillion) | $10^{51}$ | $10^{96}$ |
| Septendecillion | $10^{54}$ | $10^{102}$ |
| Octodecillion | $10^{57}$ | $10^{108}$ |
| Novemdecillion (Novendecillion) | $10^{60}$ | $10^{114}$ |
| Vigintillion | $10^{63}$ | $10^{120}$ |
| Centillion | $10^{303}$ | $10^{600}$ |

| **Name** | **Value** |
|---|---|
| Googol | $10^{100}$ |
| Gogolplex | $10^{\text{Googol}}$ |

Apart from million, the words in this list ending with -illion are all derived by adding prefixes (bi-, tri- etc.) to the stem -illion.[9] Centillion appears to be the highest name ending in -"illion" that is included in these dictionaries. Trigintillion, often cited as a word in discussions of names of large numbers, is not included in any of them, nor are any of the names that can easily be created by extending the naming pattern (unvigintillion, Duovigintillion, Duoquinquagintillion, etc.)

All of the dictionaries included googol and googolplex, generally crediting it to the Kasner and Newman book and to Kasner's nephew. None include any higher names in the googol family (googolduplex, etc.). The Oxford English Dictionary comments that googol and googolplex are "not in formal mathematical use".

Etc.

**।। श्री कृष्णार्पणमस्तु ।।**

योऽयं कालस्तस्य तेऽव्यक्तबन्धो
चेष्टामाहुश्चेष्टते येन विश्वम् ।
निमेषादिर्वत्सरान्तो महीयान्
तं त्वेशानं क्षेमधाम प्रपद्ये ॥

-भागवतम् ॥

अनाद्यनन्तकालीनं ससर्जात्मेच्छया प्रभुः ।

-ईशावास्य भाष्यम् - वराह पुराण वचनम्

विमलैः श्रुतिशाणनिशाततमैः
सुमनोऽसिभिराशु निहत्य दृढम्।
बलिनं निजवैरिणमात्मतमो-
भिदमीशमनन्तमुपास्व हरिम्॥

-द्वादशस्त्रोत्रे ४.५

सन्ततं चिन्तयेऽनन्तमन्तकाले विशेषतः।
नैवोदापुर्गृणन्तोऽन्तं यद्गुणानामजादयः॥

-द्वादशस्त्रोत्रे १-१२

.....काऽनन्तता याज्ञवल्क्य ?
दिश एव सम्राळिति होवाच ।
तस्मात् वै सम्राळपि यां कां दिशं गच्छति
नैवास्या अन्तं गच्छत्यनन्ता हि दिशः...

-बृहदारण्यकोपनिषत् षडाचार्यब्राह्मणम्

**Space is the vast region with
no known boundaries beyond earth and
atmosphere. The space is the
empti area extending in
all directions to "INFINITY".**

**Extraction book ""Universe" by
A.H. HASHMI
Pustak Mahal Delhi 2003.**

**अनन्तानां तु जीवानां यतन्ते केचिदेव हि ।**

**गीतातात्पर्य (पाद्मे)**

**परमाणुप्रदेशेऽपि ह्यनन्ताः प्राणिराशयः ।**

**-विष्णुतत्वनिर्णयः ।**

सर्वैश्च वैदिकपदैरपि लोकोशब्दैः
मेघाग्निवारिधितलादिरवैश्च सर्वैः।
एकोऽभिधेय परिपूर्णगुणः प्रियोऽलं
नारायणो मम सदैव सुतुष्टिमेतु॥ इति।

-ऐतरेयभाष्यम्